श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॐरघुनाथोरमानाथंनत्वाव्याकुरुतेधियः ॥ विशुद्ध्यै काण्वमंत्रोपनिषद्भाष्यस्यपंचिकां ॥ ईशावास्यभाष्यंव्याचिकीर्षुर्भगवांष्टीकाकारो ग्रंथादौरमारमणकृपावलोकनप्रार्थनरूपंमं गलमाचरति ॥ वदनमंभोजमिववदनांभोजं । सौंदर्यसौरभमिवसौंदर्यसौरभं । लोचनेअलीइवलोचनाली । लिहद्भ्यांआस्वाद यद्भ्यां । लिहआस्वादनइतिधातोः अवलोकयन्निितिशेषः । हरिरितिवदंष्टीकाकारो यज्ञभुजइतिभाष्यमेवानुकरोति ॥ हरतेरि कारप्रत्ययेगुणेरपरत्वेचनिष्पन्नहरिशब्दस्ययज्ञभोक्तृवाचित्वात्तेनभाष्यदिशाप्रतिपाद्यप्रार्थनंलभ्यते । यथोक्तंगीताभाष्ये । हरिः

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ श्रीम
च्छ्रीवदनांभोजगतसौंदर्यसौरभं । लिहद्भ्यांलोचनालिभ्यांभगवान्पातुनोहरिः ॥

सर्वयज्ञादिभागहारित्वात् । इडोपहूतंगेहेषुहरेभागंक्रतुष्वहं । वर्णोमेहरितःश्रेष्ठस्तस्माद्धरिरितिस्मृतइतिमोक्षधर्मेइति । गेहेषुइ ष्टिगृहेषु । तथाच हरिःसर्वयज्ञभोक्तृत्वात्यज्ञनामाभगवान्नोऽस्मान्उक्तरूपाभ्यांलोचनालिभ्यामवलोकयन्पात्वित्यर्थः । य द्वालोचनालिभ्यांपातुअवलोकयत्वित्यर्थः । करुणामृतपूर्णाभ्यांलोचनाभ्यांविलोकयेत्यन्यत्रोक्तत्वाद्यथाश्रुतेनन्वयाच्चैवमध्या हारादिनाव्याख्येयं । लिहद्भ्यामवलोकयन्नित्युभयत्रवर्तमानार्थकलडादेशशतृप्रयोगेण रमामुखावलोकनस्वमुखावलोकनयोः समानकालत्वोक्त्या स्वावलोकनसमयेभगवतोहर्षोद्रेकःसूचितः । एतदुपपादनायैववदनसौंदर्यलोचनानामंभोजसौरभालिसा

भाष्यं । श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ।

म्यकथनमित्यवगंतव्यं । ननुनित्येत्याद्यपद्यमनर्थकं । नचमंगलोपनिबंधार्थंतत् । फलप्रमाणयोरभावेनमंगलस्यैवाकर्तव्यत्वा
त् । नचचिकीर्षितभाष्यस्याविघ्नसमाप्तिःफलं शिष्टाचारानुमितश्रुतिश्चप्रमाणमितिवाच्यं । परभाष्येणचरितार्थतयाभाष्यस्यै
वाचिकीर्षितत्वात् । चिकीर्षितत्वेवा तत्समाप्तेर्मंगलानुष्ठानसाध्यत्वेपिनिबंधनासाध्यत्वेनतस्याकर्तव्यत्वात् । कर्तव्यत्वेपिवा
हरयेनमइत्येतावतापूर्णत्वेनेतरांशस्यव्यर्थत्वादित्याशंकाःपरिहरन्नाद्यपद्यंसंगमयति ॥ काण्वीमित्यादिना ॥ बृहदारण्यकोप
निषदंव्यावर्तयितु मितिमंत्रोपनिषदंव्याहरंतंसमाहितमितिभागवतंमनसिनिधायमंत्रेत्युक्तं । तस्याःब्राह्मणोपनिषत्त्वादितिभा
वः । यथावदित्यनेनापभाष्येणगतार्थतांनिराचष्टे । एतच्चतत्रतत्रव्यक्तीकरिष्यति । भगवत्पादस्ययथावत्व्याख्यानसामर्थ्योप

काण्वींमंत्रोपनिषदंयथावद्व्याकरिष्यन्भगवानाचार्यः चिकीर्षिताविघ्न
परिसमाप्त्यादिप्रयोजने तत्प्रतिपाद्यदेवतास्तुतिनती प्रथमंनिबध्नाति ॥

पादनं ॥ भगवानिति ॥ विवक्षितार्थतत्त्वज्ञानादिपूर्णइत्यर्थः ॥ अविघ्नेति ॥ इदंचशिष्यकृतमंगलापेक्षया । भगवदाचार्य
स्यविलीनप्रकृतितयाविघ्नप्रसक्तेरेवाभावात् । आदिपदेनप्रचयोगृह्यते । अनेनमंगलस्यनिष्प्रयोजनत्वशंकापरिहृता । शिष्टाचा
रानुमितश्रुतिप्रमाणेइत्यध्याहारेणनिष्प्रमाणत्वशंकापिपरिहर्तव्या । प्रतिपाद्येत्युक्त्या सर्वयज्ञभुजइत्यस्योपयोगउक्तोभवति ।
प्रतिपाद्याहिदेवतावन्दिता स्वविषयग्रंथप्रतिबोधादिकंसंपादयति । स्तुतीत्युक्त्या नित्येत्यादेरुपयोगउक्तोभवति । नती इत्य
तःपरंशिष्यान्ग्राहयितुमितिशेषः । अतएवअनुपदंतथैववक्ष्यति । ननुसर्वयज्ञभुजइतिहरेर्विशेषणंवा यज्ञोयज्ञपुमांश्चैवयज्ञेशो

यज्ञभावनः ॥ यज्ञभुक्केतिपंचात्मायज्ञेष्विज्योहरिःस्वयमितिभागवततात्पर्योदाहृतप्रमाणोक्तरूपपंचकांतर्गतयज्ञभुङ्नामकभगवद्रूपकथनंवा । नाद्यः । व्यर्थत्वात् । मूलरूपस्यावताररूपस्यवाहरेरत्राप्रतिपाद्यतया प्रतिपाद्यदेवतास्तुतिनतीइत्युक्त्यनुपपत्तेश्च । अतएवनद्वितीयः । यज्ञनामानंभगवंतंतुष्टावेत्युत्तरभाष्यानुसारेणयज्ञनाम्नःप्रतिपाद्यत्वेपि यज्ञभुङ्नाम्नोतथात्वात् । अप्रतिपाद्यस्यापिनम्यत्वेहरयेइत्येतावतैवपूर्णत्वादित्यतःप्रतीकग्रहणपूर्वकंव्याचष्टे ॥ सर्वयज्ञभुजइतीति ॥ नेदंहरेर्विशेषणं नापितन्नामरूपकथनं येनोक्तदोषानुषंगः । किंतुयज्ञशब्दप्रवृत्तिनिमित्ताभिधानमुखेनयज्ञनामकभगवद्रूपकथनमेव । नन्वेवंप्रतिपत्तिलाघवाद्यज्ञायेत्येवकिंनोक्तमिति । नैवंशंक्यं । तथासतिप्रसिद्धयज्ञाभेदेनवा भेदेपिइंद्रसूनोरिवयज्ञाभिमानित्वाद्वा के

नित्येति ॥ सर्वयज्ञभुजइति ॥ सर्वयज्ञभोक्तृत्वाद्यज्ञनाम्नइत्यर्थः ॥

वलंसंकेताद्वा यज्ञशब्दार्थत्वंभगवतोविज्ञायेत । तन्माविज्ञायीतिसूचनायप्रवृत्तिनिमित्ताभिधानस्यावश्यकत्वात् । क्रियाभिमानाद्यज्ञोसाविंद्रसूनुःप्रकीर्तितः । यज्ञेशत्वात्स्वयंविष्णुर्यज्ञोरुचिसुतःस्मृतइतिभागवततात्पर्यनिर्णयोक्तंयज्ञेशत्वमपियज्ञभोक्तृत्वमितिनतद्विरोधः । नचैवमपिहरयइतिव्यर्थमितिवाच्यं । यज्ञनाम्नोभगवदवतारत्वेविवदमानंप्रति स्वायंभुवेनमनुनाहरिरित्यनुक्तः ॥ तांस्तथावसितान्वीक्ष्ययज्ञःसर्वगतोहरिरितिभागवतानुसारेण हरिरितिज्ञात्वा ईशावास्यमित्यादिनानूक्तइति तत्तात्पर्यानुसारेणचतदुपपादनज्ञापनार्थत्वादिति । नन्वेतदयुक्तं । स्वातंत्र्यंतद्गतत्वंचशब्दवृत्तेर्हिकारणमित्यत्र प्रवृत्तिनिमित्तस्वा

---

भा० । नित्यानित्यजगद्धात्रेनित्यायज्ञानमूर्तये । पूर्णानंदायहरयेसर्वयज्ञभुजेनमः ॥

मित्वतदधिकरणत्वयोरेवशब्दप्रवृत्तिनिमित्तत्वोक्त्या भोक्तृत्वस्यापितत्वेप्रमाणाभावादित्यतःसप्तमगीताभाष्योदाहृतंप्रमाणंप
ठति ॥ यथोक्तं सुखरूपस्येति ॥ अहंसर्वस्यजगतःप्रभवःप्रलयस्तथेति गीताव्याख्यानावसरेतद्भाष्ये प्रभवादेःसत्ताप्रतीत्या
दिकारणत्वात्तद्भोक्तृत्वाच्चप्रभवइत्यादीति भोक्तृत्वंशब्दप्रवृत्तिनिमित्तत्वेनप्रतिज्ञाय तत्रप्रमाणत्वेन सुखरूपस्यभोक्तृत्वान्नतुस
र्वस्वरूपतइतिवाक्यंपठितं । ततोभवतिभोक्तृत्वंशब्दवाच्यत्वेनिमित्तमित्यर्थः । सुखरूपस्य सुखकारणस्येतिप्रमेयदीपिकायां
व्याख्यातं । भोक्तृत्वादित्यस्य सर्वोसीत्यृषिभिःस्तुतइतिपूर्वेणान्वयः । ननुकथंतर्ह्युदाहृतानुव्याख्यानेस्वातंत्र्यतद्गतत्वयोर्द्वयो
रेवशब्दप्रवृत्तिनिमित्तत्वेनोपादानं । भोक्तृत्वस्यापितत्त्वेनसंग्राह्यत्वादितिचेन्मैवं । नह्यशेषप्रवृत्तिनिमित्तसंग्रहार्थतदनुव्याख्या

यथोक्तं सुखरूपस्यभोक्तृत्वादिति । अपूर्णसुखाःसुखार्थं
भोगान्भुंजते किंतथाहरिरपि नेत्याह ॥ पूर्णानंदायेति ॥

नप्रवृत्तिः । किंतुभगवतोदुःखिबद्धादिशब्दवाच्यत्वोपपत्तयेतद्गतत्वमिवस्वातंत्र्यस्यापिप्रयोगप्रमाणाभ्यांशब्दप्रवृत्तिनिमित्त
त्वोपपादनाय । तथैवसुधायांव्याख्यातत्वात् । तत्रभोक्तृत्वग्रहणस्यकासंगतिः येनतदसंग्रहोदोषःस्यादितिभावः । यज्ञशब्दा
द्यज्ञभोक्तृत्वंकथंलभ्यतइतिचेदित्थं । यज्ञशब्दोहिअर्शआदिभ्योजित्यनेनार्शआदित्वात्तदस्यास्तीत्यर्थेअचप्रत्ययान्तः । तदस्या
स्तीतिचसंबंधसामान्यं । नतुसमवायएव । तथासतिराजाजयी गोमान्देवदत्तइत्यादौमतुपास्वाम्यप्रतीत्यभावप्रसंगात् । सामा
न्यंचयथानुकूलंविशेषेपर्यवस्यति । इहचभोक्तृत्वेपर्यवसानात्युक्तायज्ञशब्दाद्भोक्तृत्वप्रतीतिः । यज्ञशब्दाद्भोक्तृत्वएवार्थेतद्धि

॥ ३ ॥

ताइतिबहुवचनज्ञापितो अकारप्रत्ययइतिवा । यद्यपि छांदोग्यभाष्यदिशा ज्ञंजीवंयातिप्राप्नोतिनियामकतयेत्यादिप्रकारांतरेण
यज्ञशब्दवाच्यत्वंसूपपादं । तथापि यज्ञोयज्ञपुमांश्चेत्याद्युदाहृतप्रमाणेयज्ञनाम्नोयज्ञेष्विज्यइत्यनेनविशिष्ययज्ञभोक्तृत्वस्योक्तेः
तदेवप्रवृत्तिनिमित्तत्वेनोक्तं । महिमातिशयालाभाद्वैवंव्याख्यातं । यथोक्तंप्रमेयदीपिकायां । यद्यपि प्रभवत्यस्मादितिप्रभवः
प्रलीयतेऽस्मिन्नितिप्रलयइतिशक्यतेव्याख्यातुं तथापि महिमातिशयलाभादेवंव्याख्यातमिति । ननुपूर्णानंदत्वेभोगानुपपत्तिरि
त्यतआह ॥ भोगस्त्विति ॥ नन्वेतदयुक्तं । पूर्णानंदस्याप्यचिंत्यैश्वर्यबलेनभोगोपपत्तिरितितत्त्वप्रकाशिकायां आगमिष्यत्सु
खंचापितत्रास्त्येवसदापितु ॥ तथाप्यचिंत्यशक्तित्वादितिगीताभाष्येचभोगस्याचिंत्यशक्तिनिर्वाह्यत्वस्योक्तत्वात् । नहिलीला

भोगस्तुलीलयेतिभावः । पूर्णानंदत्वंहरेःकुतइत्यतआह ॥ जगद्धात्रइति ॥

त्वेननिर्वाह्यस्याचिंत्यशक्त्यानिर्वाहोयुक्तः । सर्वथादौर्घट्यएवाचिंत्यशक्त्याश्रयणादितिचेत् अस्त्यत्रविवेकः । पूर्णानंदस्यभोगा
नुपपत्तिर्द्वेधा । पूर्णत्वाद्भोगोदुर्घटइति ततएवनिष्प्रयोजनश्चेति । तृप्तेपुरुषेतदुभयदर्शनात् । तथाचदौर्घट्यशंकायामचिंत्यश
क्त्याश्रयणंतत्त्वप्रकाशिकादौ निष्प्रयोजनत्वशंकायांलीलात्वाश्रयणमत्रग्रंथेकृतमितिनकोपिविरोधः । अत्रग्रंथेअपूर्णसु
खाइत्यादिपूर्ववाक्यपर्यालोचनयानिष्प्रयोजनत्वशंकायाःस्पष्टंप्रतिभानादिति । नन्वथापि लोकवत्तुलीलाकैवल्यमितिसूत्रानु
सारेण इतिकेवलंलीलैवनिर्णीताप्रभुणास्वयमित्यनुव्याख्यानानुसारेण क्रीडाभोगोनचापरइतिमांडूकभाष्योक्तप्रमाणानुसारेण
प्रयोजनानुद्देशे कीदृशीप्रवृत्तिरितिचेत्पृच्छसि तर्हितस्याःकेवललीलात्वंब्रूमः । नहिलीलाप्रयोजनांतरायभवतीत्यादितत्त्वप्रका

शिकासुधाद्यनुसारेणचभोगस्तुलीलेतिभावइतिवक्तव्ये कथंलीलयेतिभावःइत्युक्तं । तथात्वेहिलीलोद्देशेनेतिप्रतीयते । नचत
द्युक्तं । अपूर्णतापत्तितादवस्थ्यात् । उदाहृतग्रंथविरोधात् । क्रीडार्थमितिचापरइतिनिषेध्यत्वोक्तिविरोधाच्चेतिचेत् । मैवं । अ
त्रापिलीलयेत्यस्यभावप्राधान्याश्रयणेनलीलारूपत्वेनेतिव्याख्यानान्नकश्चिद्दोषः । अत्रायंविवेकः । सोमपुरोडाशादिभोग्यपदा
र्थेषुद्विविधोभागः । स्थूलः सूक्ष्मश्च । तत्रस्थूलोजीवानांभोग्यः । सूक्ष्मःपरमेश्वरस्य । जीवेंद्रियागोचरःसारभागःसूक्ष्मउच्यते।
अवतारेषुस्थूलमपिभुंक्तेपरमेश्वरः । कुतएतत्सर्वमवगम्यतइतिचेत् गीताभाष्यतट्टीकाभ्यां तथाहिगीताभाष्यं । नचानश्नन्न
न्योअभिचाकशीति अन्योनिरन्नोपिबलेनभूयानित्यादिविरोधः । स्थूलानशनोक्तेः । आहचसूक्ष्माशनं । प्रविविक्ताहारतरइवै
वभवत्यस्माच्छारीरादात्मनइति । एतद्व्याख्यानरूपाप्रमेयदीपिका । स्यादिदंव्याख्यानं यदिभगवतोविषयभोगोयुक्तःस्यात् ।
नचैवं । तदंगीकारेश्रुत्यादिविरोधात् । ऋतंपिबंतावितिचातएवच्छत्रिन्यायेनोपचरितमित्यतआह ॥ नचेति ॥ कुतोनेत्यतआ
ह ॥ स्थूलेति ॥ श्रुत्यादिषुस्थूलस्यजीवभोग्यस्यविषयस्याभोगोक्तेः । सूक्ष्मभोगस्यचांगीकारादितिभावः । सूक्ष्माशनेप्रमितेभ
वेदियंव्यवस्था । तदेवकुतइत्यतआह ॥ आहचेति ॥ गंधादिषुयोजीवेंद्रियागोचरःसारभागः तस्यभोगंपरमेश्वरोऽस्माच्छारी
रादात्मनोजीवादतिशयेनविलक्षणभोगएवभवति । अवतारेषुस्थूलमपिभुंक्तइतीवशब्दइति । सोयंभोगःपरमेश्वरस्यनाविद्यमा
नसुखप्राप्त्यर्थो नापिविद्यमानसुखव्यक्त्यर्थः नित्यव्यक्तपूर्णसुखत्वातपरमेश्वरस्य । किंतुभक्तानुग्रहायकेवलंलीलारूपः । अत ॥ ४ ॥
एवभोगस्यकेवललीलात्वोक्तिर्घटते । अन्यथासुखव्यक्त्यैभोगइत्युक्तिःस्यात् । सुखस्यनित्यव्यक्तत्वंकुतइतिचेत् । गीताभाष्य

तट्टीकाभ्यां । तथाहिगीताभाष्यं । आहच स्रष्टापाताचसंहर्तानियंताचप्रकाशिता ॥ यतःसर्वस्यतेनाहंसर्वोसीत्यृषिभिःस्तुतः ॥ सुखरूपस्यभोक्तृत्वान्नतुसर्वस्वरूपतः ॥ आगमिष्यत्सुखंचापितच्चास्त्येवसदापितु ॥ तथाप्यचिंत्यशक्तित्वाज्जातंसुखमतीवचेति नारदीयइति । एतद्व्याख्यानरूपाप्रमेयदीपिका । सुखरूपस्यसुखकारणस्य । ननुस्रष्टापातेत्यादिकमयुक्तं । कदाचित्क्रियावेशे विकारित्वप्रसंगात् । भोगेनयद्व्राव्यंसुखंतस्यपूर्वमभावेनापूर्णत्वप्रसंगाच्चेत्यतआह ॥ आगमिष्यदिति ॥ यद्भोगेनागमिष्यत्सुखं तच्चसदाप्यस्त्येव । क्रियाश्चशक्तिरूपेणचेतिचार्थः । तर्हिकथंभोगेनसुखंजातमित्युच्यतइतिभावेनपृच्छति ॥ अपित्विति ॥ उ त्तरमाह ॥ तथापीति ॥ सदासद्भावेपीति ॥ अत्रक्रियाश्चशक्तिरूपेणेतिविशिष्योक्त्याआगमिष्यत्सुखंव्यक्तमेवास्तीतिलभ्यते । अन्यथायद्भोगेनागमिष्यत्सुखंतच्छक्तिरूपेणास्ति । क्रियाश्चशक्तिरूपेणेत्युक्तिःस्यात् । सुखव्यक्त्यंगीकारेणैवभोगनिर्वाहसंभवे अचिंत्यशक्त्यंगीकारोपिव्यर्थःस्यात् । तस्मात्सुखव्यक्त्यभावेपिभक्तानुग्रहायकेवलंलीलारूपोभोगोंगीकार्यइत्येकेवर्णयंति । ममतुप्रतिभाति ॥ यद्यपिसुखंव्यक्तमेव । तथापिभोगेनव्यज्यते । नचव्यक्तस्यव्यक्तिरनुपपन्ना । अचिन्त्यशक्त्यातदुपपाद नात् । यद्भोगेनागमिष्यत्सुखंतत्सदाव्यक्तमस्त्येव । तथापिसुखंजातं व्यक्तमित्युच्यते । कथंव्यक्तस्यव्यक्तिः । अचिंत्यशक्ति त्वात्परमेश्वरस्येतिगीताभाष्ययोजनयाअस्यार्थस्यलाभात् । इयंचयोजनोदाहृतप्रमेयदीपिकासूचितैव । किंचपुण्योगंधइतिभो गापेक्षयेतिभाष्यव्याख्यानावसरे प्रमेयदीपिकायां । सुगंधस्तुसुखहेतुरित्युपपादितमित्युक्तं । तत्सुखस्यव्यक्तस्यापिव्यक्त्यंगीका रएवोपपद्यते नान्यथा। रमणंचात्मशब्देनाऽऽदेयंमातीतिचोच्यतइत्यनुव्याख्यानसुधायां । आदेयंउपादेयंसुखंसुखसाधनंचमा

॥ ५ ॥

त्यनुभवतीत्यात्मेत्युक्तं । तत्सांप्रदायिकैर्व्याख्यातं । सुखसाधनंचेति । तथाचसुखसाधनतयाभिमतविषयानुभवाभिव्यक्तसुखा
नुभवकर्तेत्यात्मशब्दनिर्वचनेनलभ्यतइतिभावइति । ततोपिव्यक्तस्यसुखस्यव्यक्तिरस्तीतिज्ञायते । नचसुखस्यापिव्यक्त्यंगी
कारे आगमिष्यत्सुखंसदास्त्येव । क्रियाश्चशक्तिरूपेणेतिविलक्षणोक्तिर्नस्यादितिवाच्यं । क्रियावच्छक्त्यात्मनावर्तमानस्यसुख
स्यनव्यक्तिः । किंतुनित्यव्यक्तस्यैव । क्रियायाश्चव्यक्तिरूपेणावर्तमानायाःव्यक्तिरितिविशेषज्ञापनायतथोक्तिसंभवात् । नचत
र्हिभोगस्यसुखव्यक्त्यर्थत्वप्राप्त्यालीलात्वविरोधः । उदाहरिष्यमाणऋग्भाष्यटीकादिशाव्यक्तेर्भक्ताभीष्टसंपादनरूपत्वेनस्वप्रयो
जनानुद्देशितयालीलात्वोपपत्तेरिति । ऋग्भाष्यतट्टीकोक्तरीत्याबलव्यक्त्यर्थंवाभगवतोभोगः । तथाहि । इ॒मेसोमा॑सइंद॑वःसु॒ता
सो॒अधि॑ब॒र्हिषि॑ । ताँइं॒द्र॒सह॑सेपिब ॥ अत्रभाष्यं सदाविष्णुविवक्षायांयजमानबलंसहः ॥ तदिष्टस्यैवदानायतद्गुणव्यक्तिरेववा॥
अनुग्रहव्यक्तिरेवतद्गुणानांनचान्यथेति ॥ अत्रटीका ॥ इदंप्रसिद्धेंद्रेघटते सोमपानादिनातस्यबलवृद्धिसद्भावात् । परमेश्वरेतु
योजनांतरंसूचयति ॥ विष्णिवति ॥ इंद्रशब्देनविष्णुविवक्षायांयजमानबलंसहःशब्देनोच्यते । कथंतर्ह्यन्वयइत्यतआह ॥ त
दिष्टस्येति ॥ सहसेबलाय यजमानस्ययदिष्टंबलंज्ञानादिरूपंतस्यदानाय तदीयंसोमंपिबेतियोजनीयमित्यर्थः । अथसहःशब्दे
नपरमेश्वरबलमंगीकृत्यघटयति ॥ तदिति ॥ तस्यविष्णोर्योगुणोबलाख्यस्तत्रव्यक्तिर्वोच्यते । सहसेबलाय तवबलव्यक्त्यै । ॥ ५ ॥
व्यक्तिश्चबलसाध्यमभीष्टसंपादनं । एवशब्दाभ्यांपरमेश्वरबलस्यसोमेनवृद्धिंनिराकरोतीति । अत्रटीकायां तवबलव्यक्त्यै इत्यु
क्त्याबलस्यव्यक्तिरंगीकृता । भाष्येतुव्यक्त्यंगीकारःस्पष्टएव । व्यक्तिश्चेत्यादिनाटीकायांव्यक्तिशब्दार्थनिरूपणंवस्तुस्थितिम

नुरुध्यैव । नतुव्यक्तिशब्दस्यार्थांतरमस्तीत्यभिप्रायेण । अवस्थाविशेषोव्यक्तिरितिसुधावाक्यस्याप्ययमेवार्थः । अतएवानुग्रहव्य
क्तिरेवतद्गुणानांनचान्यथेत्यृग्भाष्योदाहृतप्रमाणवाक्यव्याख्यानावसरेपितट्टीकायामनुग्रहइतिभक्ताभीष्टसंपादनमुच्यतइत्युक्तं।
नहिकंसहननादिक्रियाव्यक्तेत्यस्यभक्ताभीष्टसंपादनातिरेकेणार्थांतरमस्ति । भक्ताभीष्टसंपादनंनाम भक्तैकसाधनानुकूलोव्या
पारः । नचैवंसोमपानादेर्बलव्यक्त्यर्थत्वांगीकारेभोगस्यलीलात्वोक्तिविरोधः । बलव्यक्तेर्भक्ताभीष्टसंपादनरूपायाःपरप्रयोजनो
द्देशित्वेपिभगवतःस्वप्रयोजनानुद्देशित्वात् । एतदर्थमेवटीकायांव्यक्तिशब्दार्थोनिरूपितः । नचपरप्रयोजनोद्देशित्वेपिलीला
त्वभंगः । सृष्ट्यादिव्यापारस्यापिसोयंविहारइत्यादिनापरप्रयोजनोद्देशितयाप्रमितस्यलीलात्वाभावप्रसंगात् । ततश्चायंनिष्क
र्षः । भगवान्भक्तसमर्पितान्शुभान्सुरस सुगन्ध सुरूपान्विषयान्भुंक्ते । अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागतः । मुखना
साचक्षुषांतद्भोग्यमन्नंहरेःश्रुतमित्यन्यत्रोक्तेः । भगवद्भोग्याश्चरसादयोजीवेंद्रियागोचराः । अतएवसूक्ष्माइत्युच्यंते । अवतारे
षुजीवभोग्यस्थूलमपिभुंक्ते । जीवभोग्यस्यभोक्तेशोजीवस्तद्भोगभुङ्गतुइत्यन्यत्रोक्तेः । नित्यतृप्तस्याप्यचिन्त्यशक्त्यारसादिस्वी
कारोयुक्तः । सोयंपरमेश्वरस्याचिंत्यशक्त्यानित्यव्यक्तसुखव्यक्त्यर्थंवा बलव्यक्त्यर्थंवा पक्षद्वयेपिभोगोलीलारूपएवनस्वप्रयो
जनोद्देश्यकः । व्यक्तेर्भक्ताभीष्टसंपादनरूपत्वेनस्वप्रयोजनानुद्देशित्वादिति । तदेतत्सर्वमभिप्रेत्योक्तं भोगस्तुलीलयेतिभावइ
ति । विष्णुभोगेप्रकारोयंभात्यन्योपिभवेद्यदि ॥ टीकाभाष्याद्यनुगुणःसुज्ञोक्तःसोपिसंमतः ॥ अचिंत्याःखलुयेभावानतांस्तर्के
णयोजयेदित्युक्तेरलौकिकार्थस्ययथाप्रमाणंग्राह्यत्वादिति । जगद्धातृत्वोक्त्याकथंपूर्णानंदत्वलाभइत्यतोधातृत्वमिहचेष्टकत्वं ।

तच्चपूर्णानंदत्वसाधकत्वेनश्रुतिसिद्धमित्याशयेनाह ॥ तदुक्तमिति ॥ एषपरमात्माआसमंतात्काशनादाकाशनामाविष्णुर्यदि पूर्णानंदोनस्यात्तदाकारणांतराभावान्नलोकंप्रवर्तयेत् । नचेदेषप्रवर्तयेत् तदाकः पुमानन्यात्लोकंचेष्टयेत् । कश्चप्राण्याद्धर्मादौ प्रवर्तयेत् । अन्यस्यस्वातंत्र्याभावात् । अतोलोकचेष्टान्यथानुपपत्त्या तत्कर्ताविष्णुःपूर्णानंदइतिश्रुत्यर्थः ॥ धातृत्वंचेति ॥ नचानित्यजगद्धातृत्वेनापिपूर्णानंदत्वसिद्धिसंभवेनप्रकृतनिर्वाहात्किं नित्यधातृत्वोपपादनेनेतिवाच्यं । निरर्गलैश्वर्याभावेलोकरीत्यापूर्णानंदत्वानुपपत्त्यावा वस्तुस्थितिकथनार्थंवा नित्यधातृत्वोपपादनोपपत्तेरितिद्रष्टव्यं ॥ अनाधेयातिशयत्वादिति ॥

तदुक्तं कोह्येवान्यादित्यादि । धातृत्वंचानित्यानामेवनतुनित्यानां अनाधेयातिशयत्वादितिनाशंकनीयमितिभावेनाह ॥ नित्यानित्येति ॥ नित्यंनित्यात्मनायतइत्यादेः । अशरीरस्यनजगद्धातृत्वं शरीरित्वेमरणंस्यादित्यतआह ॥ ज्ञानमूर्तयेनित्यायेति ॥ मूर्तिमत्त्वाज्जगद्धातृत्वोपपत्तिः ।

उत्पत्तिविनाशस्वभावरूपातिशयाधानशून्यत्वादित्यर्थः । नित्येषूत्पत्तिविनाशयोःस्वरूपतएवाभावात्स्वभावस्यचानागंतुकतया अन्याधीनत्वासंभवादितिभावः । नन्वनाधेयातिशयत्वादित्यस्यकःपरिहारइत्यतोनुव्याख्यानोक्तएवेत्याशयेनतत्पठति ॥ नित्यमिति ॥ नित्यंनित्यात्मनायतः ॥ तथाऽनित्यतयाऽनित्यंनित्यशक्त्यास्वयेश्वरः ॥ नियामयतिनित्यंचेत्येतावतोग्रहणंसूचयितुमित्यादेरित्युक्तं । यथाअनित्यंघटादिकमनित्यतयानियम्यते । तथानित्यंनित्यात्मनानित्यंचसर्वदैवेश्वरोनियामयति । ॥ ६ ॥
यतएवंतस्मादुक्तमुपपन्नमितियोजना ॥ एतदुक्तंभवति । यथाहिघटादयोऽनित्यत्वस्वभावाअपिनाकस्मादनित्याभवंति । तथा

त्वेचोत्पत्त्युत्तरक्षणएवविनाशप्रसंगात् । एवंनित्यस्यापिनित्यतायदिपराधीना तदाकोदोषः । नचानित्यतापराधीनेतिकदाचित् घटादेर्नित्यताप्राप्ता । विनाशकारणोपनिपातध्रौव्यात् । तथानित्यस्यनित्यतायाःपराधीनत्वेपि नजात्वनित्यताप्रसक्तिः । तन्नियमननियमनात् । तदिदमुक्तंनित्यंचेति ॥ नचैतदलौकिकं । नित्यकर्मभिर्दुरितप्रागभावानुवृत्तेःसाध्यत्वेनवादिभिरभ्युपगतत्वात् । अनुवृत्तेर्नित्यतासंपादनानतिरेकात् । सज्ज्ञानानंदशीर्षोसौसज्ज्ञानानंदबाहुकः ॥ यदात्मकोभगवांस्तदात्मिकाव्यक्तिः ॥ किमात्मकोभगवान्ज्ञानात्मकऐश्वर्यात्मकइत्यादिप्रमाणानुसारेणज्ञानपदमुपलक्षणमित्यभिप्रेत्याह ॥ ज्ञानाद्यात्मकत्वेनेति ॥ प्रतिपाद्यदेवतास्तुतीत्युक्तोपपादनायभाष्योक्तांस्तुतिमुपनिषदारूढांकर्तुमाह ॥ वक्ष्यतेचेति ॥ उपनिषदीतिशेषः ॥ एतत्सतस्याश्चमूर्तेर्ज्ञानाद्यात्मकत्वेन नित्यत्वोपपत्तिरिति । वक्ष्यतेचैतत्सर्वं याथातथ्यतोर्थान्व्यदधात् । वायुरनिलर्वमिति ॥ सर्वयज्ञभोक्तृत्वांतंविशेषणपंचकमित्यर्थः । तान्येववाक्यानिविशेषणक्रमेणपठति ॥ याथातथ्यतइत्यादि ॥ यद्यपि याथातथ्यतइतिवाक्यस्य व्यवधानान्निर्मितवानितिविष्णुतत्वनिर्णयटीकानुसारेणोत्पत्तिप्रतिपादकत्वमेवप्रतीयते ननियामकत्वप्रतिपादकत्वं । जगद्धातृत्वंचैतद्ग्रंथपर्यालोचनयानियामकत्वं । ततोनैतद्वाक्योदाहरणमत्रोचितं । तथापि विपूर्वस्यदधातेरनेकार्थत्वेनेहनियमनार्थत्वाद्वा उपलक्षणतयानियामकत्वस्यापिविवक्षितत्वाद्वानोक्तदोषः । अतएवैतद्वाक्यव्याख्यानरूपप्रमाणव्याख्यानावसरे सस्रृजइत्युपलक्षणमितिवक्ष्यतीतिज्ञातव्यं ॥ वायुरनिलममृतमिति ॥ अः ब्रह्मैवनिलंनिलयनंआश्र

योयस्यवायोःसोप्यमृतःकिमुपरमेश्वरइतिकैमुत्येनात्रनित्यत्वंलभ्यतइतिभावः ॥ यत्तेरूपमिति ॥ रूपशब्दोक्तायामूर्तेःकल्याणतमत्वंनाम ज्ञानाद्यात्मकत्वमेवेतिभावः ॥ सपर्यगाच्छुक्रमिति ॥ शुक्रंतच्छोकराहित्यादितिवक्ष्यमाणानुसारेणशोकराहित्योक्त्यापूर्णानंदत्वलाभइतिभावः ॥ तस्मिन्निति ॥ मारुत्येवयतश्चेष्टासर्वातांहरयेर्पयदितिवक्ष्यमाणप्रमाणानुसारेणाप्शब्दोक्तसर्वयज्ञभोक्तृत्वलाभइतिभावः । यद्यपि त्रिविधाहिदेवतावंद्याभवति विशिष्टाइष्टाअधिकृताचेति । तत्रविशिष्टत्वोपपादनायाद्यंविशेषणद्वयं । इष्टत्वोपपादनाय ज्ञानमूर्तयेपूर्णानंदायेतिविशेषणद्वयं । तंयथायथोपासतेतदेवभवतीतिश्रुतेः। अधिकृतत्व

ममृतं यत्तेरूपंकल्याणतमं सपर्यगाच्छुक्रं तस्मिन्नपोमातरिश्वादधातीत्यादि । देवताप्रणा

मानंतरंगुरुप्रणामःकर्तव्यइतिशिष्यानुग्राहयितुंगुरुत्वेनापिहरिंप्रणमति ॥ यस्मादिति ॥

सूचनाययज्ञभुजइतिविशेषणमितिवा अनिर्धारितस्वरूपस्यनमनायोगान्निर्धारणस्यचलक्षणसाध्यत्वेनविभवाद्धरेर्लक्षणान्याहेतिवा आद्यंपद्यंप्रकारांतरेणव्याख्यातुंशक्यं । व्याख्यातंचटीकाकृताग्रंथान्तरे । तथापि शिष्यैरेवोह्यतामितिभावेननव्याख्यातमितिद्रष्टव्यं ॥ गुरुत्वेनापीति ॥ अत्रापिपदेनभगवतोभाष्यकारस्यगुरुदेवतयोरभेदंसूचयति । तर्हिपुनःप्रणामोऽव्यर्थइत्यतोनिमित्तसमावेशेनैमित्तिकविलोपनियमाभावादितिन्यायंमनसिनिधायोक्तं ॥ गुरुत्वेनेति ॥ निबंधस्यप्रयोजनमाह ॥ शिष्यानुग्राहयितुमिति ॥ हरिंप्रणमतीति ॥ ननुनायंप्रणामःकिंतूपनिबंधः । अतोगुरुत्वेनापिहरिप्रणामंनिबध्नातीत्येववक्तुमुचि ॥ ७ ॥

भा० । यस्माद्ब्रह्मेंद्ररुद्रादिदेवतानांश्रियोपिच । ज्ञानस्फूर्तिःसदातस्मैहरयेगुरवेनमः ।

तं । अतएवप्राक्निबध्नातीत्युक्तं । अन्यथापूर्वोत्तरविरोधापातादितिचेत् । भवत्येवायमपिप्रणामोपनिबंधः । प्रणामवाचकन मइत्यादिशब्दप्रयोगएवहिप्रणामोपनिबंधः । स्तुतिनिबंधोनामोत्कर्षप्रतिपादकशब्दप्रयोगएव । नतुस्तौमीतिस्तुतिवाचकशब्द प्रयोगः । तथात्वेकुत्रापिस्तुतिनिबंधोनस्यात् । नचैवंप्रणमतीत्यनुपपत्तिः । भक्तिपूर्वंनमआदिशब्दप्रयोगस्यवाचिकनमस्कार त्वेननिबधंस्यापिप्रणामरूपत्वोपपत्तेः । प्रमाणत्वस्यमानसादौनिबंधत्वव्यभिचारेपि निबंधस्यप्रणामाव्यभिचारात् । प्रणामवा चकशब्दानुमापकलिपिर्निबंधइत्यंगीकारेहिनिबंधस्यप्रणामव्यभिचारोभवेत् । नचैवमित्युक्तं ॥ नचैवंनमस्काराधिकारग्रथनसू चनेशिष्यशिक्षार्थमितितत्वप्रकाशिकायां नमस्कारग्रथनस्यशिष्यशिक्षार्थत्वोक्तिविरोधइतिवाच्यं । स्वयंवाचिकनमस्काररूपत्वे प्यानुषंगिकशिष्यशिक्षार्थत्वेबाधकाभावात् । एतदभिप्रायेणैवचतत्रतत्रटीकाकाराणांसंकलय्यव्यवहारः । तद्यथा नारायणप्र णामादिकंग्रंथादौनिबध्नाति ॥ नारायणमिति ॥ नारायणप्रणामस्येवगुरुप्रणामस्याप्यभिमतसिध्यंगतयाकार्यारंभे अवश्यमनु ष्ठेयत्वात्तदाचरणपुरःसरंब्रह्ममीमांसाशास्त्रव्याख्यानंसमर्थयमानःप्रतिजानीते ॥ तमेवेति ॥ पौनःपुन्येनप्रणमति ॥ निःशेषे ति ॥ अपरोक्षतयासंबोध्यप्रणमति ॥ अशेषेतीत्याद्यंतयोःसुधायामुक्तं । नारायणनमस्कारंग्रथयति । देवतानतिसमनंतरंगुरू नपिनमति । देवतात्वेनगुरुत्वेनचांतेपिनमतीत्याद्यंतयोःतत्वप्रकाशिकायामुक्तं । नारायणवंदनंस्वयमंतरायविधुरोपिशिष्यान् ग्राहयितुंप्रकरणादौनिबध्नाति ॥ सदागमैकविज्ञेयमिति ॥ अंतेपिमंगलाचरणस्यकर्तव्यत्वान्नारायणस्तुतिप्रणामौकरोति ॥ स्व तंत्रोयमितीत्याद्यंतयोर्विष्णुतत्वनिर्णयटीकायामुक्तं । एवमन्यत्रापिटीकाकारीयोव्यवहारःस्फुटः । अत्राप्यंतेनारायणंस्तुतिन

तिभ्यांप्रीणयतीत्युक्तं । चंद्रिकायामपि ग्रंथादौमंगलमाचरतीत्युक्तं । नचैतत्सर्वमुक्तविधयावाचिकनमस्कारनिबंधनयोरेकत्वा भावेसंभवति । तस्मात्प्रणामनिबंधस्यापिप्रणामरूपत्वात्प्रणमतीत्युपपन्नतरं । रमाब्रह्मादीनामित्येवोक्तिंविहाययोगविभागकर णस्यप्रयोजनमाह ॥ ब्रह्मादीनामिति ॥ नचब्रह्मणोप्राप्तज्ञानांगीकारेविरिंचेतरेषांतिरोहितलाभोवेतितत्वप्रकाशिकाविरोधः । तत्रविरिंचज्ञानतिरोधानाभावस्योक्तत्वेनाप्राप्तप्राप्तिनिषेधादितिवाच्यं । विरिंचज्ञानतिरोधानस्यात्यल्पत्वाभिप्रायेणैवतत्वप्रका शिकायांविरिंचेतरेषामित्युक्तं । नतुसर्वात्मनातिरोधानाभावाभिप्रायेण । अन्यथातत्रैवोक्तार्थसंमतित्वेनोदाहृते ब्रह्मणस्तुप्रायो नाप्रतिभासितं ॥ विष्णोःप्रीत्यर्थमेवास्यश्रोतव्यंप्रायशोभवेदितिगीतातात्पर्यवाक्येप्रायःशब्देनब्रह्मणोप्यन्यप्रतिभानानुज्ञा

**ब्रह्मादीनामप्राप्तज्ञानमुत्पद्यते श्रियस्तुसर्वदाविद्यतइतिसूचयितुं श्रियोपीतिपृथग्ग्रहणं ।**

नेनतद्विरोधापातात् । आमुक्तेर्व्यक्त्यतिशयोपेतमितिप्रमाणलक्षणविरोधापाताच्चेतिभावः ॥ श्रियस्त्विति ॥ बुद्ध्याविवेकेन ज्ञानमितिवर्तते । नन्वेतदैतरेयभाष्यविरुद्धं । तत्रजानंत्याअपिदेव्यालोकानुग्रहार्थविशेषज्ञानार्थंचपृष्टःसभगवानाह । कतरः सआत्मेतीत्यादौविशेषज्ञानार्थमित्यनेनरमाज्ञानेप्यप्राप्तातिशयलाभस्योक्तत्वादितिचेत् मैवं । अत्ररमाज्ञानस्यसर्वदाविद्यतइति नित्यत्वमेवोक्तं । नत्वभिव्यक्त्यभावः । तत्रतुनित्यव्यक्तस्यापिरमाज्ञानस्यभगवदुपदेशरूपसामग्रीमहिम्नाव्यक्तिविशेषएवोच्य ते । यथा विशिष्टादक्षिणासुखइत्यत्रभगवत्संयोगविशेषेणार्धनारीरूपरमायाःरूपांतरापेक्षयाव्यक्तस्यापिसुखस्यव्यक्तिविशेषरू पोतिशयउक्तस्तद्वज्ज्ञानेप्युपपद्यतइतिसांप्रदायिकाः । यद्वा अनुव्याख्याने नित्यमेकप्रकाराचनारायणमतिःपरा ॥ सूर्यप्रभावा

दखिलंभासयन्तीनिरंतरा ॥ निर्लेपावीतदोषाचनित्यमेवाविकारिणीत्यादिनानारायणमतेर्वृद्धिह्रासराहित्यलक्षणैकप्रकारत्वमुक्त्वा तदेवप्रायस्तल्लक्षणाश्रियइत्यनेनरमामतावतिदिश्य तथैवस्पष्टताभावादित्यनेनस्पष्टतायाएवप्रायःशब्दव्यावर्त्यत्वेनोक्तेस्तद्बलाद्रमाज्ञानस्यनित्यमेकप्रकारत्वमेवेत्यवसीयते । स्पष्टत्वंतुनविषयोपाधिकमितिप्रसिद्धमेव । सर्गस्थितिर्यतिर्ज्योतिर्नित्यानंदप्रदोक्षरेइत्येतद्व्याख्यानरूपविष्णुतत्वनिर्णयटीकायां ज्योतिर्नित्याविर्भूतोभगवदितरसर्वसाक्षात्कारइत्यनेनरमाज्ञानस्यनित्याविर्भूतत्वोक्तेश्च । विशिष्टादक्षिणासुखइत्यपिसुखविषयकमेव । नज्ञानविषयकं । ऐतरेयभाष्यवचनमपि अज्ञलोकानुग्रहार्थंज्ञानिलोकस्यविशेषज्ञानार्थंचेत्येवंपरतयाऽव्याख्येयं । कुतएतत्सर्वमितिचेत् । निरवकाशोदाहृतानुव्याख्यानानुरोधादेवेतिसर्वसमंज

चशब्दोऽवधारणे । यस्मादित्यनेनसंबध्यते ।

सं । ननुमूलेचशब्दोव्यर्थः । नचदेवतासमुच्चयार्थइतियुक्तं । अपिशब्देनैवतत्सिद्धेः । एकक्रियायोगेसमुच्चयसंभवेपिप्रकृतेक्रियाभेदस्यवक्ष्यमाणत्वेनसमुच्चयानुपपत्तेश्च । अतएवचशब्दस्यदेवतानामित्यनेनसंबंधेनान्योन्यसमुच्चयार्थौचापिशब्दावित्यपिव्याख्यानंनयुक्तमित्यतआह ॥ चशब्दइति ॥ नन्ववधारणार्थत्वमप्ययुक्तं । अपिशब्दस्यसमुच्चयार्थत्वेविरोधेनावधारणानुपपत्तेः । अर्थांतरपरत्वेप्यवधारणस्यव्यर्थत्वादित्यतोर्थविशेषज्ञापनायभिन्नक्रमेणसंबंधांगीकारान्नदोषइत्याशयेनाह ॥ यस्मादित्यनेनेति ॥ तथाच ननुरमायानित्यमुक्तत्वेनस्वभावसिद्धतज्ज्ञानस्यनभगवदधीनत्वं । अन्येषामपिदेवानांस्वस्वगुरूपदेशलब्धज्ञानस्यतदनुत्पन्नत्वमेव । ततोनभगवतोगुरुत्वमुपपद्यतइत्याशंकापरिहारायस्मादेवेत्युक्तं । नित्यमुक्तायाःश्रियोपिज्ञान

स्फूर्तिर्यस्मादेव नस्वभावबलायत्ता द्रव्यंकर्मचेत्यादिप्रमाणसिद्धत्वात् । तथाब्रह्मादिदेवतानांज्ञानस्फूर्तिर्यस्मादेव । नतुस्वस्वगु
रूपदेशात् । अज्ञानांज्ञानदोविष्णुः अगम्यत्वाद्धरिस्तस्मिन्नाविष्टइत्यादिप्रमाणसिद्धत्वात् । तेषांचनिमित्तमात्रत्वादितियोज
नोक्ताभवति । ज्ञानशब्दस्यभावसाधनत्वेज्ञानज्ञानस्यभगवदधीनत्वप्राप्त्या नगुरुत्वोपपादनंस्यादित्यतोव्याचष्टे ॥ ज्ञातव्या
र्थेति ॥ ज्ञानशब्देनज्ञेयमुपलक्ष्यतइतिप्रमेयदीपिकानुसारेणलक्षणयावा साध्यतइतिसाधनंकृत्यल्युटोबहुलमितिस्मरणादिति
सुधानुसारेणकर्मणिल्युडंततयावा ज्ञानशब्देनज्ञातव्यलाभइतिभावः । ननुक्रियाकारकसंबंधस्यवाक्यार्थत्वात्तस्यचक्रियाभिसं
बंधसापेक्षत्वेनात्रक्रियाध्याहारेकर्तव्येउत्पद्यतइत्यध्याहारेश्रियइत्यस्यानन्वयप्रसंगः । विद्यतइत्यध्याहारेब्रह्मादीनामित्यस्यान

ज्ञानस्फूर्तिःज्ञातव्यार्थप्रतिभा । यथायोगंक्रियाध्याहारः ।

न्वयप्रसंगइत्यतउत्पद्यतेविद्यतइतिक्रियाद्वयाध्याहारमंगीकृत्यब्रह्मादीनांज्ञानस्फूर्तिरुत्पद्यते । श्रियोज्ञानस्फूर्तिःसदाविद्यतइत्य
न्वये नकोपिदोषइत्याशयेनाह ॥ यथायोगमिति ॥ यथासंभवमित्यर्थः । एतद्विवरणायैवपूर्वमुत्पद्यतेविद्यतइतिचोक्तं । न
चनीलमुत्पलंराज्ञोयंपुरुषइत्यादौक्रियाभिसंबंधाभावेपिवाक्यार्थबोधान्नतन्नियमइतिवाच्यं । तत्रहिनीलमुत्पलंनरक्तं राज्ञोयंपुरु
षोनदेवदत्तस्येतिविशेषणांतरव्यावृत्तिप्रतीतावेवतात्पर्येणक्रियासंबंधाभावस्यादोषत्वात् । इहचक्रियासंबन्धबोधएवतात्पर्येण
तस्यावश्यकत्वात् । एतच्चानभिहितसूत्रेआकरेस्पष्टमितिज्ञातव्यं । मूले सदेत्यस्यविद्यतइत्यध्याहृतक्रियया अन्वयः । अतएव
प्राक्सर्वदाविद्यतइत्युक्तं नमनंस्वभावइतिज्ञापयितुंसदानमइतिवान्वयः । हरयेगुरवेनमइत्येतावताचारितार्थ्येपिगुरुत्वोपपाद

नाययस्मादित्यादिकमितिसुज्ञेयत्वान्नोक्तमित्यवगंतव्यं । ननुऋषिदेवताज्ञानस्यानावश्यकत्वेनतज्ज्ञापकोत्तरभाष्यमनर्थकं ।
यदिचयोहवाइत्यादिश्रुत्यातस्यावश्यकत्वं तर्हितयैवच्छंदःप्रभृतिज्ञानस्याप्यावश्यकत्वावगमात्तदपिवक्तव्यमेवेत्यर्धचरतीयानु
पपत्तिरित्यतःश्रुत्युपन्यासपूर्वकंछन्दःप्रभृत्यकथनेनिमित्तंचवदन्उत्तरंभाष्यंसंगमयति ॥ योहवाइति ॥ छन्दोगानांब्राह्मण
वाक्यमिदं । अस्यार्थः । ऋषिर्मंत्रद्रष्टा तस्येदमार्षं । ऋषिदृष्टत्वमितियावत् । छंदोगायत्र्यादि देवतामंत्रप्रतिपाद्योर्थः । सैव
दैवतं । ब्राह्मणपदेनतद्व्याख्येयमंत्रार्थोलक्ष्यते । इदंचोत्तरटीकायामेवव्यक्तं । आर्षंचछन्दश्चदैवतंचब्राह्मणंच आर्षछन्दोदैवत
ब्राह्मणानि अविदितानि यस्यमंत्रस्य । तेनमंत्रेणेतिसमुदायैकवचनं । मंत्रशब्दोवेदमात्रपरो नतुछन्दोबद्धवाक्यपरः । तथास

योहवाअविदितार्षच्छंदोदैवतब्राह्मणेनमंत्रेणयजतियाजयतिअध्यापयतिवा स्थाणुं
वर्च्छतिगर्तंवापद्यतेप्रवामीयतइतिश्रुतेर्दैवतादिज्ञानवतएवविद्याफलतीतिज्ञायते ।

तिसर्वत्रऋष्यादिज्ञानस्यावश्यकतानस्यात् । यइतिश्रवणात्सइत्यध्याहार्यं । योऋषिछन्दोदैवतार्थानज्ञात्वाकेवलेनमंत्रेणयाजय
तिअध्यापयतिवासःस्थाणुंस्थाणुत्वंतमस्थाणुरूपंनरकं स्थावरजातिंवाऋच्छतिप्राप्नोति । गर्ते भूगर्तरूपेनरके कूपांतश्चारिमंडूक
कच्छपादितिर्यग्योनिषुवा पद्यतेपात्यते । प्रमीयतेवाअल्पायुर्भवतीति । अस्यपापीयान्भवतीति । तस्मादेतानिमंत्रेमंत्रेविद्या
दितिवाक्यशेषेणान्वयः ॥ देवतादिज्ञानवतइति ॥ यद्यपिश्रुत्यनुसारेणऋष्यादीतिवक्तव्यं तथापिप्राधान्याभिप्रायेणैवमुक्त
मितिज्ञेयं ॥ फलतीतिज्ञायतइति ॥ नचवाच्यंऋष्याद्यज्ञानेअनर्थएवोच्यते नतुतज्ज्ञानेफलंभवतीति । नहिनिंदानिंद्यंनिंदि

तुंप्रवर्तते अपितुविधेयंस्तोतुमितिन्यायेनविदितऋष्यादिकेनमंत्रेणकृतंयजनादिकंसफलंभवतीत्यत्रतात्पर्यात् । एतच्छ्रुतिव्याख्यानरूपानुक्रमणिकासमाख्यानाच्चायमर्थोज्ञायते । तथाह्यनुक्रमणिका मंत्राणांब्राह्मणार्षेयछंदोदैवतवित्याजनाध्यापनाभ्यां श्रेयोधिगच्छतीति । ननुयोहवेतिश्रुतौब्राह्मणपदेनगाथारूपब्राह्मणज्ञानस्यावश्यकत्वमुच्यते । तदसंगतं । ऋषिछंदोदैवतानि ब्राह्मणार्थस्वराद्यपि ॥ अविदित्वाप्रयुंजानोमंत्रकंटकउच्यते ॥ स्वरोवर्णोक्षरंमंत्रोविनियोगोर्थएवच ॥ मंत्रंजिज्ञासमानेनवेदितव्यंपदेपदेइतिस्मृतिभ्यामवश्यवक्तव्यत्वेनप्राप्तार्थज्ञानानुक्तिश्च । ब्राह्मणजाप्योर्थोब्राह्मणार्थः । सच विनियोगोमंत्रार्थश्च । ब्राह्मणपदस्यार्थोपलक्षकत्वांगीकारेणश्रुतौतद्दोषपरिहारेपि भाष्ये ऽर्थानुक्त्यान्यूनतायाअपरिहारादित्यतआह ॥ तत्रब्राह्मण

तत्रब्राह्मणपदोपलक्षितार्थज्ञानंव्याख्यानादेवभविष्यति । छंदोज्ञानंत्वक्षरगणनयासुकरमेव ।

पदोपलक्षितेति ॥ तत्र ऋष्यादिचतुष्टये । ब्राह्मणपदोपलक्षितोयोमंत्रार्थस्तज्ज्ञानमित्यर्थः । ब्राह्मणस्यमंत्रव्याख्यानरूपतयामंत्रार्थस्यब्राह्मणज्ञाप्यत्वात् ज्ञाप्यज्ञापकभावरूपशक्यसंबंधेनलक्षणोपपन्नेतिभावः । उपलक्षणाचगौणीचतिस्रःशब्दस्यवृत्तयइत्यादौलक्षणामात्रेप्युपलक्षणशब्दप्रयोगादिहोपलक्षणाजहल्लक्षणैवेतिज्ञातव्यं । तथाप्यवश्यज्ञातव्यछन्दोनुक्त्याभाष्येन्यूनतेत्यतआह ॥ छंदोज्ञानंत्विति ॥ चतुर्विंशत्यक्षरागायत्री । द्वादशाक्षराजगती । इत्यादिप्रमाणानुसारेणाक्षरगणनयेत्यर्थः । सुकरमेवेत्यतःपरं स्वरादिज्ञानमप्यध्ययनादिनासुकरमितिद्रष्टव्यं । तेनोदाहृतश्रुतिस्मृतिभ्यांस्वरादेरप्यवश्यवेदितव्यत्वेनोक्तेस्तदनुक्तिदोषइतिचोद्यानवकाशः । नचैवमप्युदाहृतस्मृतिभ्यामेवावश्यवेद्यत्वेनोक्तविनियोगानुक्त्यान्यूनतातादवस्थ्यमिति

वाच्यं । एकैकस्मिन्यज्ञादावप्रधानकर्मणामतिबहुत्वात्केनमंत्रेणकिंकर्मानुष्ठेयमितिजिज्ञासायांहि कर्मणेवांदेवेभ्यःशकेयं हस्ताव वनिक्ते ऐंद्र्यागार्हपत्यमुपतिष्ठतइत्यादिब्राह्मणवाक्येनमंत्राणांविनियोगःक्रियते । अयंचकर्मानुष्ठानएवोपयुक्तोनब्रह्मज्ञाने । ब्रह्म ज्ञानेपीत्थंभावानामनेकत्वेनतत्रतत्रमंत्राणांविनियोगसद्भावेपि एतदुपनिषद्गताःसर्वेपिमंत्राःकेवलंब्रह्मपराइतिनान्यत्रविनियोग मपेक्षन्ते।आद्यमंत्रत्रयस्यब्रह्मज्ञानोपयुक्ताधिकारप्रतिपादकत्वेपिनोदाहृतमंत्राणामिवान्यत्रविनियोगः।अतोयुक्ताविनियोगानुक्ति रिति । नचछन्दःप्रभृतीनामिवऋषिदेवते अप्यनुक्रमणिकादिनासुज्ञानेइतिवाच्यं । ऋग्भाष्यदिशाऽनुक्रमणिकादेस्तत्रतत्रस्व

ऋषिदेवतेतुज्ञापयन्नाह ॥ स्वायंभुवइति ॥ व्याचिकीर्षितत्वेनबुद्धौप्रकृतत्वादेतैरित्युक्तं । मूर्त्यंतरंवि

हायययज्ञस्यस्तुतौकिंकारणमित्यतोविशेषतःस्वसंबंधमाह ॥ आकूतिसूनुमिति ॥ भगवंतमितिपूजार्थ

लितत्वेनतदुक्ते अनाश्वासाद्वा प्राधान्यज्ञापनायवा तदुभयोक्तिसंभवादितिसर्वसमंजसं ॥ ज्ञापयन्निति ॥ (सूचयन्निति ॥) स्वायंभुवोऋषिःयज्ञोदेवतेतिकण्ठतोनुक्तत्वादेवमुक्तमितिज्ञातव्यं । ननुसर्वनाम्नांप्रकृतपरामर्शकत्वात्कथमेतैरितिप्रागप्रकृतमं त्रपरामर्शइत्यतोबुद्ध्याप्रकृतत्वमेवहिप्रकृतत्वं ग्रंथप्रकृतत्वंतुबुद्धिप्रकृतत्वस्यज्ञापकं । प्रकृतेचबुद्ध्याप्रकृतत्वाद्युक्तःपरामर्शइत्या शयेनाह ॥ बुद्धाविति ॥ तदुपपादनायोक्तं ॥ व्याचिकीर्षितत्वेनेति ॥ इच्छायाःज्ञानपूर्वकत्वेनव्याकर्तव्यज्ञानाभावेव्या चिकीर्षानुपपत्तिरितिभावः ॥ विशेषतःस्वसंबंधमिति ॥ (विशेषसंबंधमिति ॥) दौहित्रत्वरूपमित्यर्थः । अतएवप्रमाणे

---



भा० । स्वायंभुवोमनुरेतैर्मंत्रैर्भगवंतमाकूतिसूनुंयज्ञनामानंविष्णुंतुष्टाव ।

स्वदौहित्रमितिवक्ष्यति । अनेनान्यस्ययज्ञनाम्नोभगवतोऽभावात्कथमिदंविशेषणमितिचोद्यंपरिहृतं । उक्तशंकापरिहारकतयासं बंधविशेषज्ञापनायस्वरूपकथनत्वांगीकारात् ॥ कुतएतदिति ॥ स्वायंभुवादेर्ऋष्यादित्वंकुतःप्रमाणादित्यर्थः । अप्रतीतिनि रासायपदद्वयार्थमाह ॥ सावधानेनेति ॥ रक्षोभिःखादितुंप्राप्तस्यापिभगवत्स्तुतिविषयेजागरूकत्वज्ञापनायेदंविशेषणमिति ज्ञातव्यं । एतदभिप्रायेणैव इतिमंत्रोपनिषदंव्याहरंतंसमाहितमितिभागवतेसमाहितमित्युक्तं । ननुकिंमोक्षार्थंतुष्टावउतरक्षो निरसनार्थं । अथोभयार्थं । नाद्यः । रक्षोभिरुग्रैरित्यादिनारक्षोनिरसनार्थत्वप्रतीतेः । नद्वितीयः । स्तोत्रंश्रुत्वैवतदसहमानैः

कुतएतदवगम्यतइत्यतआह ॥ स्वायंभुवइति ॥ अवहितात्मना सावधानेनमनसा । यद्य

प्यसौस्वपरमोक्षार्थंतुष्टाव तथाप्यवांतरमस्यफलांतरंसिद्धमित्याह ॥ रक्षोभिरिति ॥

खादितुंप्राप्तइतिप्रमाणानुसारेण इतिमंत्रोपनिषदंव्याहरंतंसमाहितं ॥ दृष्ट्वाऽसुरायातुधानाजग्धुमभ्यद्रवन्क्षु(क्षु)धाइत्यादिभाग वतानुसारेणचस्तोत्रारंभानंतररक्षसांप्राप्तत्वेपिततःप्रागप्राप्तत्वेनतन्निरसनस्योद्देश्यत्वासंभवात् । अतएवनतृतीयोपीत्यतस्तृतीयं पक्षमंगीकृत्यरक्षोनिरसनस्यावांतरफलत्वान्नदोषइत्याह ॥ यद्यपीति ॥ अत्रमनुयोग्यब्रह्मवाय्वादिप्रतीकेषु देवतांतरयोग्यपूषा दिप्रतीकेषूपासनस्यसर्वसाधारणाहमाद्युपासनस्यचोक्तत्वात्स्वपरमोक्षार्थमित्युक्तं । यद्यप्यवहितात्मनेत्यंतेनैवऋष्यादेरुक्तत्वादवां ॥ ११ ॥

भा० । स्वायंभुवःस्वदौहित्रंविष्णुंयज्ञाभिधंमनुः । ईशावास्यादिभिर्मंत्रैस्तुष्टावावहितात्मना । रक्षोभिरुग्रैःसंप्राप्तःखादितुंमोचितस्तदा । स्तोत्रंश्रुत्वैवयज्ञेनतान्हत्वाऽवध्यतांगतान् ।

तरफलप्रतिपादकप्रमाणशेषोदाहरणमनर्थकं । तथापिशिववरातिक्रमणयुक्त्यायज्ञस्यविष्णुत्वसमर्थनज्ञापनार्थंवा उपनिषदोमोक्ष रक्षोनिरसनरूपप्रधानावांतरप्रयोजनज्ञापनार्थंवातदुदाहरणं। अवांतरप्रयोजनोक्त्याप्रधानस्यापिसुज्ञानत्वात् । अतएवमोक्षस्येत्या दिनातथैववक्ष्यतीतिज्ञातव्यं। तदेत्यस्यमोचनकालइत्याद्यर्थप्रतीतिनिरासाय इतिमंत्रोपनिषदंव्याहरंतंसमाहितं ॥ दृष्ट्वाऽसुरायातु धानाजग्धुमभ्यद्रवन्क्षु(न्क्षु)धेत्यादिभागवताविरोधेनार्थमाह ॥ तदास्तुतिकालइति ॥ इदंचखादितुंसंप्राप्तइत्यनेनान्वेति। तत्रनि मित्तंस्तोत्रंश्रुत्वैवेति ॥ अनेनस्तोत्रंश्रुत्वैवप्रसन्नेनयज्ञेनमोचितइत्यन्वयभ्रांतिःपरिहृताभवति । तथात्वेउदाहृतभागवतविरोधापा

तदा स्तुतिकाले स्तोत्रंश्रुत्वैव तदसहमानैःरक्षोभिःखादितुंसंप्राप्तोयज्ञेनतेभ्योमोचितइत्यर्थः ।

तान्राक्षसानित्यध्याहारेणपुल्लिंगोपपत्तिः । अवध्यत्वेकारणमाह ॥ प्रादाद्धीति ॥ ननुबाधने

कथंतेषांशक्तिरित्यतआह ॥ तैरिति ॥ अन्येषांतैर्वध्यत्वमितितेषामन्यवधेसामर्थ्यमित्यर्थः ।

तादितिद्रष्टव्यं । स्तोत्रश्राविणांसर्वेषामेवप्रवृत्त्यभावात्रक्षसामेवकुतइत्यतएवशब्दाभिप्रायउक्तस्तदसहमानैरिति ॥ रक्षःश ब्दस्यनपुंसकत्वात्तानीतिवक्तव्यमित्यतोध्याहृतेनपुल्लिंगेनान्वयान्नदोषइत्याह ॥ तान्राक्षसानितीति ॥ ननुरक्षोभ्योऽवध्य त्ववरदानसमये अन्येषांरक्षोवध्यत्वशापदानंहरस्यानुचितं । अन्यैस्तदाहरद्रोहानाचरणादित्यतो नेदमन्येषांशापदानं । किंतुर क्षोभ्योवरांतरदानमित्यभिप्रेत्यतत्परतयाभाष्यंयोजयति ॥ अन्येषामिति ॥ ननुनकेवलंतेषामवध्यत्वं किंत्वन्येषांवध्यत्वंचे

भा० । प्रादाद्धिभगवांस्तेषामवध्यत्वंहरःप्रभुः । तैर्वध्यत्वंतथाऽन्येषामतःकोन्योहरेःप्रभुरितिब्रह्मांडे ।

त्यस्यार्थस्यसमुच्चायकेनतथाशब्देनप्रतीतेःकथमेवंव्याख्यानमित्यतस्तथाशब्दस्यतात्पर्यार्थवरसमुच्चायकत्वेपि श्रुतार्थसमुच्चाय कत्वाभावान्नदोषइत्याशयेनाह ॥ तथाशब्दइति ॥ नकेवलमवध्यत्ववरं किंत्वन्यवधसामर्थ्यरूपंवरंचेत्येवंवरसमुच्चयेइत्यर्थः। नन्वतःकोन्योहरेःप्रभुरित्यत्रहरेरेवपरमसमर्थत्वेपूर्वोक्तस्यहेतुत्वमुच्यते तदयुक्तं । प्रादादित्याद्यव्यवहितवाक्योक्तवरदानस्यहे तुत्वमुत व्यवहितवाक्योक्तस्य । नाद्यः । अप्रयोजकत्वेनहेतुहेतुमद्भावानुपपत्तेः । द्वितीयेपि यतोराक्षसाःयज्ञेनहताः अतइति वा । यतःस्वायंभुवोयज्ञेनमोचितः अतइतिवा । यतस्तुष्टावअतइतिवावक्तव्यं पक्षांतराभावात् । नचतद्युक्तं । राक्षसहननादे रत्यल्पत्वेनेतरसाधारण्येनचहरेरेवपरमसमर्थत्वसाधकत्वानुपपत्तेरित्यतः पूर्ववाक्यसमुदायलब्धशिववरातिक्रमणस्यहेतुत्वेना

तथाशब्दोवरसमुच्चये । यतएवंहरिःशिववरमप्यतिक्रां
तवानतोहरेरन्यःकोनामप्रभुःसमर्थःकिंतुहरिरेवेत्यर्थः ।

न्वयांगीकारान्नकश्चिद्दोषइत्याशयेनहेतुहेतुमद्भावंस्पष्टयति ॥ यतइत्यादि ॥ अतःशब्दश्रवणाद्यतइत्यध्याहारः । हेतोरसि द्धिपरिहारायएवमित्युक्तं । ननुहरेरन्यःसमर्थोनास्ति हरेःशिववरातिक्रमणवत्त्वात् इतिव्यधिकरणमित्यतःश्रुतसाध्येहेतुत्वासंभ वेपि पर्यवसितेतत्संभवतीत्यभिप्रेत्याक्षेपार्थककिंशब्दलब्धंपर्यवसितसाध्यंदर्शयति ॥ किंतुहरिरेवेति ॥ ननुभागवतेचायमर्थ एवोक्तइत्युत्तरभाष्येणेशावास्यादिमंत्राणांस्वोक्तार्थेभागवतंप्रमाणत्वेनोच्यते । उतमन्वादीनामृष्यादित्वे । नाद्यः । मंत्रार्थस्या द्याप्यनुक्तत्वेनतत्रप्रमाणानपेक्षणात् । नद्वितीयः । तत्रप्रमाणस्योक्तत्वात् । प्रमाणांतरत्वेपिभागवतेचायमृष्यादिरुक्तइत्युक्ति

प्रसंगादित्यतोद्वितीयंपक्षंमनसिनिधायावतारयति ॥ अत्रेति ॥ स्वायंभुवो ऋषिर्यज्ञोदेवतेत्यत्रेत्यर्थः । प्रमाणांतरमित्युक्त्वा चशब्दोऽव्याख्यातः । मंत्रार्थस्यप्रागनुक्तत्वादयमितिपरामर्शानुपपत्तिरित्यतोबुद्धिस्थवक्ष्यमाणपरामर्शकत्वान्नदोषइत्याशयेनोक्तं ॥ योर्थोवक्ष्यतेऽयमिति ॥ अष्टमादाविति ॥ अष्टमस्कंधस्यादिभागेप्रथमाध्याये तत्रापिप्रथमभागइत्यर्थः । तद्यथा। आत्मावास्यमिदंविश्वंयज्जगत्यांजगन्मनः ॥ तेनत्यक्तेनभुंजीथाःमागृधःकस्यचिद्धनमिति । अस्तुकिंततइत्यतआह ॥ तत्रचेति ॥ तस्मिन्नेवभागवते इतिमंत्रोपनिषदंव्याहरंतंसमाहितमित्यनेनमनोःस्तोतृत्वं तांस्तथाऽवसितान्वीक्ष्ययज्ञःसर्वगतोहरिरि

अत्रप्रमाणांतरमाह ॥ भागवतेचेति ॥ ईशावास्यादिमंत्राणांयोर्थोवक्ष्यते
ऽयमेवभागवतेऽष्टमादावुक्तः । तत्रचमनुःस्तोता यज्ञनामाविष्णुःस्तुत्यइति
स्पष्टंप्रतीयते । तत्समाख्यानादत्रापितयोरेवऋषिदेवतात्वंज्ञायतइतिभावः ।

त्यत्रयज्ञनाम्नोविष्णोःस्तुत्यत्वंचस्पष्टंप्रतीयतइत्यर्थः । ततोपिकिंप्रकृतइत्यतआह ॥ तत्समाख्यानादिति ॥ (तत्समाख्येति ॥ यद्यपिभागवतेचायमेवार्थउक्तइतिभाष्यस्यभागवतेऽष्टमादावयंमनोःस्तोतृत्वंयज्ञनाम्नःस्तुत्यत्वमित्येवंरूपोर्थउक्तइत्येव व्याख्यानमुचितं । तावतैवोक्तार्थेभागवतस्यप्रमाणत्वलाभात् । नत्वीशावास्यादिमंत्राणांयोर्थइत्यादिव्याख्यानं तस्यप्रकृतानुपयोगात् । तथापि तथाव्याख्यानेमन्वादेर्ऋषित्वादिकंभागवतोक्तमित्येवविज्ञायते । नत्वीशावास्यादिमंत्रऋषित्वादिकं । भा

भा० । भागवतेचायमेवार्थउक्तः ।

गवतेईशावास्यादिमंत्रोदाहरणपूर्वकंमन्वादेःस्तोतृत्वाद्यकथनात् । टीकोक्तव्याख्यानेत्वीशावास्यादिमंत्राणांभागवतेअर्थतोनुवा
दलाभेनमन्वादेरीशावास्यादिमंत्रऋषित्वादिकंसुज्ञानं । अत एवंव्याख्यातमितिज्ञातव्यं । अनेनेशावास्यादिमंत्राणांयोर्थोवक्ष्य
तेअयमेवभागवतेअष्टमादावुक्तः । तत्रचार्थतोमंत्रानुवादरूपेभागवते अयंमन्वादेःस्तोतृत्वादिरूपोर्थउक्तइत्यावृत्त्याभाष्यंयोजि
तंभवति । व्याख्येयत्वप्रयोजकविषयाद्यकथनप्रयुक्तांभाष्यकृतोन्यूनतांपरिहरति ॥ अनेनेति ॥ ऋष्यादिप्रदर्शनपरग्रंथेनेत्य
र्थः । अभ्यर्हितत्वाद्विषयाधिकारीतिवक्तव्ये अधिकार्यादित्वेनवचनं स्ववचनप्रमाणभाष्यानुसारेणेतिज्ञेयं । विषयादिसमुदाय

अनेनोपनिषदोधिकारिविषयप्रयोजनाभिसंबंधोपिदर्शितोभवति । मन्वादी
नामधिकारिणां यज्ञनाम्नोविष्णोर्विषयस्य मोक्षस्यप्रधानस्यरक्षोनिरसन
स्याप्रधानस्यचप्रयोजनस्यसूचितत्वात् । अतोयुक्तमेतदुपनिषदोव्याख्यानं ग
हनार्थत्वाचेति । उपदिष्टमपितत्वंअधिकारिणएवहृदयेऽवतिष्ठते नान्यस्येति

स्यैवव्याख्येयत्वप्रयोजकत्वं नत्वेकैकस्येत्यभिप्रायेणसंबन्धइत्येकवचनं । विषयादिमतोप्युत्तानार्थस्यानादरेणव्याख्येयत्वमित्य
तआह ॥ गहनार्थत्वाचेति ॥ उक्तंचटीकाकारैरन्यत्र गहनार्थत्वाच्चान्यपरित्यागेनास्यैवव्याख्येयत्वमिति ॥ नन्वाद्यमंत्रस्यै
वव्यर्थत्वात्तद्गतेशावास्यपदव्याख्यानपरमुत्तरभाष्यंसुतरामनर्थकमित्यतोमंत्रंतावदवतारयति ॥ उपदिष्टमपीत्यादिना ॥
उपनिषत् विच्छिन्नतृष्णत्वमाद्येनमंत्रेणविधत्तेइत्यन्वयः । यद्वा मनुरितिकर्तृपदमध्याहार्यं । तथात्वेउपनिषदधिकारसिद्ध्यर्थ


मित्येकंपदं । ननुतत्वप्रतिपादनायप्रवृत्तोपनिषत् विच्छिन्नतृष्णत्वंकथंप्रतिपादयेदित्यतउक्तं ॥ तावदिति ॥ तदेवस्पष्टयति
॥ तत्वंविवक्षुरिति ॥ अनेजदेकमित्यादिनेतिशेषः । तर्ह्यर्थभेदादेकवाक्यत्वंनस्यादित्यतोऽवांतरार्थभेदोनदोषायेत्याशयेनो
क्तमधिकारसिद्ध्यर्थमिति ॥ तत्वज्ञानाधिकारस्यवैराग्यस्यसिद्ध्यर्थमित्यर्थः । ननुतत्वोपदेशेनैवतत्वज्ञानसिद्धेःकिंवैराग्यस्य
तत्राधिकारत्वकल्पनयेत्यतउक्तमुपदिष्टमपीत्यादीतिशब्दांतं ॥ अनेनान्वयव्यतिरेकावुक्तौ इतिशब्दोहेतौ । अधिकारसि
द्ध्यर्थमित्यनेनान्वयः । नन्वेवंमागृधःकस्यस्विद्धनमित्येतावतावैराग्यस्यविहितत्वादन्यद्व्यर्थमित्यतउक्तं ॥ सोपपत्तिकमिति ॥

तत्वंविवक्षुरुपनिषदधिकारसिध्यर्थंविच्छिन्नतृष्णत्वंतावदाद्येनमंत्रेणसो
पपत्तिकंविधत्ते । तत्रेशावास्यपदंदुर्गमार्थत्वाद्व्याख्याति ॥ ईशस्येति ॥
अनेनावासमर्हतीत्यावास्यं ईशस्यावास्यंईशावास्यमित्युक्तंभवति ।

एतच्चाग्रेस्पष्टं । एवंमंत्रमवतार्यभाष्यमवतारयति ॥ तत्रेति ॥ मंत्रइत्यर्थः । मंत्रस्यावश्यकत्वेसिद्धइतिवा । ननुविग्रहप्रदर्श
नार्थमुत्तरभाष्यस्यप्रवृत्ति रुताऽऽवास्यपदव्याख्यानार्थं । नाद्यः । ईशस्यावास्यमीशावास्यमित्येववक्तव्यत्वात् ।नद्वितीयः । ई
शस्येत्यस्यव्यर्थत्वात् । आवास्यपदेनतदर्थालाभाच्चेत्यतःउभयोरपिविवक्षितत्वान्नान्यतरवैयर्थ्यमित्यभिप्रेत्यावास्यपदेनावास
योग्यत्वलाभप्रकारंदर्शयन्विग्रहमपिदर्शयति ॥ अनेनेति ॥ आवासमर्हतीति ॥ अनेनाङ्पूर्वाद्वसनिवासइत्यस्मादर्हेकृत्य

भा० । ईशस्यावासयोग्यमीशावास्यं ।

तृचश्चेत्यर्हार्थेण्यत्प्रत्ययेआदिवृद्धौआवास्यमितिभवतीत्युक्तंभवति । नन्वीशावास्यमित्यत्राऽध्यापकैरीशेति वास्यमितिच पद द्वयस्यपठ्यमानत्वात्कथंभाष्येएकपदत्वेनव्याख्यानं । परेणाप्यतएवभिन्नपदत्वेनव्याख्यातमितिचेन्मैवं ॥ द्रवंत्पाणीशुभंस्प तीइत्यादावध्यापकपदपाठातिक्रमेणऋग्भाष्येप्रकारांतरेणव्याख्यातत्वेनाध्यापकपाठस्यापपाठत्वाभिप्रायेणवा ऋष्यंतरदृष्टैकप दत्वाभिप्रायेणवा सर्वज्ञभाष्यकृद्व्याख्यानस्योपपन्नतरत्वात् । नचपदद्वयस्यापिऋष्यंतरदृष्टत्वेतेनभाष्यकृदुक्तार्थालाभइतिवा च्यं । ईशापरमेश्वरेणविभक्तिव्यत्ययेनेशस्यपरमेश्वरस्यवास्यंवासार्हमितिव्याख्यानेनतल्लाभोपपत्तेः । अपव्याख्यानंत्वर्थानुप

जगत्यामित्येतत्पृथिव्यामित्यन्यथाप्रतीतिनिरासायव्याचष्टे ॥ जगत्यामिति ॥ तेनेतिपरामर्शस्य

विषयोनप्रतीयते त्यक्तस्यचभोगसाधनत्वमयुक्तमतोदुर्गमार्थंतृतीयपादंव्याख्याति ॥ तेनेति ॥

पत्तेरेवानुपपन्नं । नतुभिन्नपदत्वेन । युक्तंचैकपदत्वाश्रयणेनव्याख्यानं । आत्मावास्यमिदंसर्वंयज्जगत्यांजगन्मनः इतिभागव तेएकपदत्वेनैवार्थतोस्यानुवादात् । भिन्नपदत्वस्यार्थतोनुवादपक्षे आत्मवास्यमित्येवस्यान्नतुदीर्घतयेतिभाति ॥ अन्यथाप्रती तीति ॥ जगतीशब्दस्यपृथिवीपरत्वे सर्वमस्वतंत्रंपरमेश्वराधीनमितिवक्ष्यमाणार्थालाभात्प्रकृतासंगतिः । प्रवृत्तयेप्रकृतिगमि तिवक्ष्यमाणप्रमाणविरोधश्च । अतोन्यथाप्रतीतित्वमितिभावः ॥ नप्रतीयतइति ॥ प्रतीयमानस्यजगतईशस्यवापरामर्शोनो पपद्यते । जगतेशेनवात्यक्तेनेत्यस्यासंगतत्वात् । समासेअप्रधानतयाप्रकृतस्येशस्यप्राधान्येनपरामर्शायोगाच्चेतिभावः । ईशप



भा० । जगत्यांप्रकृतौ । तेनईशेनत्यक्तेनदत्तेनभुंजीथाः ।

रामर्शपक्षोक्तद्वितीयंदोषंपरिहरति ॥ समासइति ॥ बुद्ध्याविवेकेनेति ॥ प्राधान्येनोपस्थितस्यविशिष्टस्यप्रथममन्वयबोधे जातेविशेषणविशेष्यव्यतिरेकेणविशिष्टस्याभावाद्विशेष्यान्वयेबाधिते विशेषेणान्वयस्यन्यायप्राप्तत्वमिति बुद्ध्याविवेकेनेत्यर्थः। एतस्यस्वर्गीध्वस्तइत्याद्युदाहरणं । यद्वाशब्दतःप्राधान्यार्थतःप्राधान्ययोर्बुद्ध्याप्राबल्यदौर्बल्यविवेकेक्रियमाणेअर्थतःप्राधान्य स्यैवप्रबलत्वादीशस्यचार्थतःप्रधानत्वाद्युज्यते तेनेतिपरामर्शइत्यर्थः । त्यक्तेनेत्यस्यदत्तेनेतिव्याख्यानेनैवप्रथमदोषपरिहारःसु ज्ञानइतिभावः । ननुतेनेतीशपरामर्शांगीकारेपिवाक्यार्थाव्यवस्थितिरेवजगदीशस्यावासमर्हति । प्रकृत्यांजगत् । ईशेनदत्तेन भुंजीथाः । कस्यस्विद्राजादेःसकाशात्धनंमागृधइत्येतेषामन्योन्यान्वयशून्यत्वादित्यतोभाष्यमुपलक्षणमित्यभिप्रेत्य स्वतःप्रवृ

समासेउपसर्जनीभूतस्यापीशस्यबुद्ध्याविवेकेनायंपरामर्श

इतिभावः । पूर्वार्धोक्ततात्पर्यपरामर्शश्चायमितिज्ञातव्यं ।

त्त्यशक्तत्वादितिवक्ष्यमाणप्रमाणानुसारेणतेनेत्येतत्प्रकारांतरेणव्याचष्टे ॥ पूर्वार्धेति ॥ जगतईशावास्यत्वे ईशाधीनप्रकृत्याधार त्वेचोक्ते ततएवेशस्यस्वातंत्र्यंजगतोस्वातंत्र्यंचयत्तात्पर्यतःसिद्धं तत्परामर्शश्चायमित्यर्थः । एवंचसतितत्श्चायमितिवक्ष्यमा णदिशाश्रौतविशेषणानांहेतुहेतुमद्भावेनान्वयःसुगमइतिभावः । नन्वेवमपिमंत्रार्थानुपपत्तिरेव । जगत्स्वप्रवृत्तयेईशस्यावासम र्हतीत्येतदसिद्धं । प्रमाणाभावात्जगत्यांजगदित्यप्यप्रामाणिकं । प्रामाणिकत्वेवाजगतःप्रकृत्यधीनत्वप्राप्तावपीशाधीनत्वाप्रा प्तेः । नचप्रकृतेरीशाधीनत्वादीशाधीनप्रकृत्याधारस्यजगतःईशाधीनत्वमविकलमितिवाच्यं । प्रकृतेरीशाधीनत्वेप्रमाणाभावादि

त्यतः सर्वत्रप्रमाणोपन्यासेनासिद्धिंपरिहरन्श्रौतपदानांहेतुहेतुमद्भावेनयोजनाप्रकारप्रदर्शनपूर्वकंमंत्रार्थंसंगृह्णाति ॥ ततश्चेति ॥ इदंसर्वंयत्किंचजगदित्येतेषांतच्छब्दाध्याहारपूर्वकमन्वयंप्रदर्शयति ॥ यत्किंचजगदिदंतत्सर्वमिति ॥ यदिदंकिंचजगत्त त्सर्वमितियोजना । प्रवृत्त्यर्थमात्मनइत्यस्यात्मनःप्रवृत्त्यर्थमितिसंबंधः । एवमसिद्धिंपरिहृत्य तेनत्यक्तेनेत्यत्रास्यसाक्षाद्धेतुत्वासं भवादवांतरसाध्यमध्याहरति ॥ तेनज्ञायतइति ॥ एवमेवातोपीत्युत्तरवाक्यमपिव्याख्येयं । नन्वीशावास्यमित्यनेनैवेशजग तोःस्वातंत्र्यपारतंत्र्यसिद्ध्याजगत्यांजगदितिव्यर्थमित्यतः प्रकारांतरेणेशादेःस्वातंत्र्याद्युपपादकत्वान्नवैयर्थ्यमित्याशयेनाह ॥

ततश्चायंमंत्रार्थः । यत्किंचजगदिदंतत्सर्वंप्रवृत्त्यर्थमात्मनईशस्यावासमर्हतीतिताव त्तदेवानुप्रा विशदितिश्रुतिप्रसिद्धं । तेनज्ञायतेस्वयमिदंप्रवृत्तावशक्तंपरमेश्वराधीनमिति । किंच जगत्यांप्रकृ ताविदंसर्वमाश्रितमित्येत दाकाशएवतदोतंचप्रोतंचेतिश्रुतिसिद्धं । प्रकृतिश्चपरमेश्वराधीना ।

किंचेति ॥ नचजगत्यांजगदितिश्रुतेःस्वयंप्रमाणत्वात्तदुक्तेर्थे आकाशएवेतिश्रुत्युपन्यासोऽयुक्तइतिवाच्यं । प्रमाणस्यप्रमाणं चेद्बलवद्धिद्यतेमुने ॥ ब्रह्मदृष्टानतोमंत्रान्प्रमाणंसलिलेश्वरइत्यादिप्रमाणानुसारेणबलवत्त्वार्थंवा मीमांसाप्रकारप्रदर्शनार्थंवा तदुपन्यासोपपत्तेः ॥ आकाशएवेति ॥ दीप्तेराकाशशब्दोक्ताश्रीर्हिसर्वाश्रयामतेतिबृहद्भाष्यदिशा आकाशशब्दश्चित्प्रकृति वाचकइतिभावः । एवमसिद्धिंपरिहृत्यासंगतिंपरिहर्तुंश्रुतावध्याहर्तव्यमाह ॥ प्रकृतिश्चेति ॥ अत्राप्यसिद्धिंपरिहरति ॥ एत

उप० । ईशावास्यमिदꣳसर्वंयत्किंचजगत्यांजगत् ।



स्मिन्निति ॥ अक्षरमंबरांतधृतेरित्युक्तदिशाअक्षरशब्दवाच्योविष्णुरितिभावः । एवंप्रकारद्वयेनेशजगतोःस्वातंत्र्यपारतंत्र्येउप पाद्य तत्रतात्पर्यसिद्धंस्वातंत्र्यं तेनत्यक्तेनेत्यत्रहेतुत्वेनयोजयति ॥ यतएवमिति ॥ आवृत्तस्यतेनेत्यस्यहेतौतृतीयांतत्वमित्या शयेनोक्तं ॥ कारणेनेति ॥ परमेश्वरस्यसाक्षाद्राजादिवद्वित्तदातृत्वमसंभवीत्यतउक्तं ॥ यदृच्छयेति ॥ भगवदिच्छयेत्यर्थः। भुजधातोरनेकार्थत्वाद्विवक्षितमर्थंदर्शयति ॥ भोगंकुर्याइति ॥ अत्रयज्जगत्यांजगन्मनइतिभागवतसमाख्ययास्वकीयंमनः

एतस्मिन्खल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेत्यादिश्रुतेः । ततोपिसर्वमस्वतंत्रंपरमेश्वराधीनमिति विज्ञायते । यतएवमीश्वरएवस्वतंत्रस्तेनकारणेन तेनेशेनत्यक्तेनदत्तेन वित्तेन यदृच्छयालब्धे नेतियावत् । भुंजीथाःभोगंकुर्याः । यतश्चेशादन्यदस्वतंत्रंतेनतस्यदानेसामर्थ्याभावात्कस्यस्वित्क स्यापिराजादेःसकाशात्धनंमागृधः माकांक्षेथाः ॥ ७ ॥ मंत्रार्थस्थापनायस्मृतिसमाख्यामाह ॥

संबोध्यमध्यमपुरुषप्रयोगःकृतइतिद्रष्टव्यं । प्रकारद्वयसिद्धमस्वातंत्र्यमपिहेतुत्वेनयोजयति ॥ यतश्चेति ॥ तेनेत्यतःपरंकारणे नेत्यनुवर्तते । अप्रयोजकत्वपरिहाराय तस्यदानेसामर्थ्याभावादित्युक्तं । ननुमागृधःकस्यस्विद्धनमित्यत्र परकीयद्रव्यापहारे च्छानकार्यैतिप्रतीयते । तथात्वेऽस्यमंत्रस्यवैराग्योपदेशरूपत्वंनस्यादित्यतो ऽतोनान्यंप्रयाचयेदितिभाष्यंमनसिनिधायव्याच ष्टे ॥ राजादेःसकाशादिति ॥ ननुप्रमाणेइदंजगत्ईशावास्यंस्वतःप्रवृत्त्यशक्तत्वादितिसाध्यसाधनभावःप्रतीयते । सोनुपप

उप० । तेनत्यक्तेनभुंजीथामागृधःकस्यस्विद्धनं ॥ १ ॥

न्नः । असिद्धेनस्वतःप्रवृत्त्यशक्तत्वेन सिद्धेशावास्यत्वस्यसाधनानुपपत्तेः । अनुपयुक्तंचेशावास्यत्वसाधनं । स्वतंत्रत्वादीशेन दत्तेनभुंजीथाः । राजादेरस्वतंत्रत्वात्ततोमागृधइतिह्यर्थोत्रविवक्षितः । तत्रजगतईशावास्यत्वसाधनस्यकउपयोगः । किंतुईश जगतोःस्वातंत्र्यपारतंत्र्यसाधनस्यैवेत्यत एवशब्दाध्याहारेणस्वतःप्रवृत्त्यशक्तत्वस्यसाध्यत्वलाभप्रकारंदर्शयति ॥ स्वतःप्रवृत्त्य शक्तत्वादेवेति ॥ एवशब्दाभिप्रायमाह ॥ अन्यथेति ॥ यदिस्वतःप्रवृत्त्यशक्तंनस्यात्तर्हिप्रयोजनाभावादीशावास्यंनस्यादि त्यर्थः । अयंभावः । नात्रयथाश्रुतःसाध्यसाधनभावः किंत्वीशावास्यत्वात्स्वतःप्रवृत्त्यशक्तमितिविपरीतएव । नचैवंवक्रोक्ति

स्वतइति ॥ स्वतःप्रवृत्त्यशक्तत्वादेवेदंजगत्प्रवृत्तयेईशावास्यं अ
न्यथातन्नस्यात् । अतईशावास्यत्वात्स्वतःप्रवृत्त्यशक्तंईशाधीनं ।

र्व्यर्थेतिवाच्यं । साधनस्येशावास्यत्वस्य साध्यस्वतःप्रवृत्त्यशक्तत्वायोगव्यवच्छेदज्ञापनार्थत्वात् । साधनस्यसाध्यायोगव्यवच्छे देज्ञापिते व्यभिचारशंकायाहेतूच्छेदेनाप्रयोजकत्वशंकायाश्चानुदयात् । एवमेवहिवह्निमत्त्वादेवधूमवत्त्वमित्यादिप्रयोगोव्या ख्यायतेशास्त्रेषु । अन्यथातत्रापियथाश्रुतसाध्यसाधनभावप्रसंगेनबहुविप्लवप्रसंगादिति । अवधारणमहिम्नालब्धंयथास्थितसा ध्यसाधनभावंदर्शयति ॥ अतईशावास्यत्वादिति ॥ तेनत्यक्तेनेत्यत्रेशाधीनत्वस्यैवहेतुत्वं नतुस्वतःप्रवृत्त्यशक्तत्वस्येत्यत ईशा



भा० । स्वतःप्रवृत्त्यशक्तत्वादीशावास्यमिदंजगत् ।

धीनमित्युक्तं । यस्मादित्यस्यपूर्वोत्तराभ्यांसंबंधमभिप्रेत्याह ॥ यस्मादिति ॥ ततोपीत्यस्य स्वतःप्रवृत्त्यशक्तमीशाधीनमि
तिपूर्वेणान्वयः । अतःशब्दान्वयार्थंयच्छब्दमनूद्यव्याचष्टे ॥ यदिति ॥ यदित्यस्याव्ययत्वंवा प्रथमायाविपरिणामंवांगीकृत्ये
दंव्याख्यानमित्यवगंतव्यं । तदधीनप्रवृत्तित्वादित्येतत्पूर्वसिद्धानुवादरूपमेव नापूर्वहेतुकथनमित्याशयेनोक्त मेवमुक्तप्र
कारेणेति ॥ अतइत्यस्यपूर्वेणोत्तरेणचसंबंधइत्याशयेनोक्त मतस्तद्दत्तेनेति ॥ अतइति ॥ यतोजगत्स्वतःप्रवृत्त्यशक्तं
अतोराजादेरस्वतंत्रत्वेनदानेसामर्थ्याभावादित्यर्थः । प्रयाचयेदितिस्वार्थेणिजित्याशयेनाह ॥ प्रयाचेतेति ॥ प्रमाणेणिजंतस्य

किंच यस्मादिदंप्रकृतिगं यस्माच्चविष्णुःप्रकृतीश्वरस्ततोपि । यद्यस्मादेव
मुक्तप्रकारेणतदधीनस्वरूपत्वात्सर्वंवित्तंतदीयमेवातस्तद्दत्तेनैवभुंजीथाः ।
अतःपरमेश्वरादन्यंनप्रयाचेतभवानित्यर्थः ॥१॥ तृष्णाविच्छेदवत्स्वोचित

धात्वंतरत्वेनपरस्मैपदप्रयोगेपि वस्तुतोयाचतेरात्मनेपदित्वात्प्रयाचेतेत्युक्तमितिज्ञातव्यं । उदाहृतभागवतानुसारेणस्वमनःसंबो
ध्यमनुनोक्तत्वाद्भवानित्युक्तं ॥ १ ॥ प्रथममंत्रेवैराग्यरूपाधिकारप्रतिपादनानंतरंद्वितीयमंत्रेतत्वंप्रतिपाद्यतइतिभ्रमनिरासायत
त्प्रतिपाद्यंसोपपत्तिकंदर्शयति ॥ तृष्णाविच्छेदवदिति ॥ उपदिष्टमपितत्वंस्वोचितकर्मानुष्ठानेनशुद्धएवहृदयेऽवतिष्ठतेनान्य
त्रेतिपूर्ववदुपपादनमितिज्ञेयं ॥ नन्वयंवतिःप्रथमांताद्व्याख्यातव्यः । नचासौयुक्तः । तत्रतस्येवेतिसूत्रविरोधादितिचेत् । न ।

 भा० । प्रवृत्तयेप्रकृतिगंयस्मात्सप्रकृतीश्वरः । तदधीनप्रवृत्तित्वात्तदीयंसर्वमेवयत् । तद्दत्तेनैवभुंजीथाअतोनान्यंप्रयाचयेदितिब्रह्मांडे ॥१॥

तत्रतस्येवेत्यस्यप्रायिकत्वात् । अन्यथा पूर्ववत्सनइत्यत्रपूर्वस्मादिवेतिपंचम्यंताद्वतिर्नस्यात् । कार्यत्वानुमानेघटवदित्यादिप्रयोगनिवाहायकुसुमांजलिकारादिभिःप्रायिकत्वेनव्याख्यातत्वाच्च। उक्तंचटीकाकृताविष्णुतत्वनिर्णयटीकायां तत्रतस्येवेतिलक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वाद्घटवदितियुज्यतइति । विस्तृतंचैतदाकरे विद्धवदितिच्छांदसोद्वितीयांताद्वतिरितिसुधावाक्याभिप्रायस्तुतत्रैवावगंतव्यः । इतिशब्दोहेतौ ॥ तदिति ॥ कर्मानुष्ठानंवातदावश्यकत्वंवेत्यर्थः । ननुश्रुतौकर्माणिकुर्वन्नेव

कर्मानुष्ठानमप्यावश्यकंज्ञानार्थिनामित्येतत्कुर्वन्नेवेतिद्वितीयमंत्रेणविधत्ते॥ तत्रनान्यथेतोस्तीत्येतदुर्गमार्थत्वाद्व्याख्याति ॥ अकुर्वतइति ॥ ततश्चायंमंत्रार्थः । शतंसमाः शतंवर्षाणि इहमानुषादिजन्मनि यज्जिजीविषेत्जीवितुमिच्छेत्ततत्कर्माणिस्वोचितानि

जिजीविषेदित्ययुक्तं । कर्मकरणमात्रस्यविधेयत्वेनजीवनेच्छाविधानस्यव्यर्थत्वात् । इच्छायाअविधेयत्वाच्चेत्यतोयत्तच्छब्दाध्याहारपूर्वकमुद्देश्यविधेयभावंव्यत्यासेनदर्शयति ॥ यज्जिजीविषेदिति ॥ यच्छब्दयोगाज्जीवनेच्छायाअनुवाद्यत्वमेव नविधेयत्वमितिभावः । जीवनमिच्छेदितियत्तत्कर्मकरणपूर्वकमेवेत्यर्थः । जीवनेच्छाकर्मकरणयोःसमानकालत्वोक्तेरभिप्रायमाह ॥ आमरणमिति ॥ यद्वाननुकर्माणिकुर्यादित्येवालं किंजिजीविषेदित्यनुवादेनापीत्यतः कर्मकरणेनैरंतर्यरूपेत्थंभावज्ञापकं ॥ १७ ॥

उप० । कुर्वन्नेवेहकर्माणिजिजीविषेच्छतꣳसमाः । एवंत्वयिनान्यथेतोस्तिनकर्मलिप्यतेनरे ॥ २ ॥

भा० । अकुर्वतःकर्मनलिप्यतइतिनास्ति ।

तत् । तथाभूतस्यैवज्ञानोपयोगित्वादित्याशयेनतात्पर्यार्थमाह ॥ आमरणमिति ॥ एवशब्दार्थःसर्वथेति ॥ पूर्वार्धोक्तार्थेहेतुत्वेनोत्तरार्धमवतारयति ॥ कुतइति ॥ ज्ञानार्थिनास्वोचितानिकर्माणिकुतःकार्याणि । तेषांसाक्षाज्ज्ञानकारणत्वाभावादित्याक्षेपार्थः । एवमित्यनुवादेन कर्माणिकुर्वतीतिव्याख्यानं । एवंभूतेत्वयीत्युक्तंभवति । कर्ममात्रस्यलेपकत्वाभावात्पापमित्युक्तं । काम्यपुण्योपलक्षणमेतत् । एवमुत्तरत्रापिद्रष्टव्यं । ननुकर्माणिकुर्वतीत्यत्रकर्मशब्देनपापरूपाणिविवक्षितान्युतस्वोचितानि । नाद्यः । पापानिकुर्वतिपापंनलिप्यतइत्यस्यव्याहतत्वादसंगतत्वाच्च । नद्वितीयः । स्वोचितानिकर्माणिकुर्वतिपापप्रसक्तेरे

कुर्वन्नेवामरणंभगवत्पूजात्मकानिअसंकल्पितफलानिस्वोचितानिकर्माणिसर्वथा कुर्यादितियावत् । कुतः एवंकर्माणिकुर्वतिनरेमनुष्यमात्रेपित्वयि कर्मपापंनलिप्यते । स्वोचितेनासंकल्पितफलेनकर्मणाभगवत्पूजांकुर्वतमल्पाधिकारिणमपि नप्रागुत्तराणिकर्माणिपापानिबाधंते। ततश्चज्ञानाधिकारीसभवतीतियावत् ।

वाभावेनपापंनलिप्यतइतिनिषेधानुपपत्तिः । नचपापशब्देनश्रवणादिप्रागुत्तरपापानांविवक्षितत्वात्नाप्रसक्तिरितिवाच्यं । तर्हि नलिप्यतइतिलेपाभावोक्त्ययोगात् । लेपाभावोहिनरकाद्यनर्थाभावः । नचाद्यौज्ञानार्थिकृतस्वोचितकर्मानुष्ठानमात्रेणशक्यौंगीकर्तुं । सिद्धांतविरुद्धत्वात्प्रमाणविरुद्धत्वाच्च । ज्ञानार्थिनास्वोचितानिकर्माणिकुतःकार्याणीतिशंकायांज्ञानसाधनत्वेवाच्ये कर्मणामलेपकत्वोक्तेरसंगतिश्चेत्याशंकाःपरिहरन्अक्षरार्थमुक्त्वातात्पर्यार्थमाह ॥ स्वोचितेनेत्यादिना यावदित्यंतेन ॥ अत्रपू

जामित्यंतेनकर्माणीत्यस्य अल्पाधिकारिणमपीत्यनेनमनुष्यमात्रेपीत्यस्य प्रागुक्तराणिपापानीत्यनेनसमुदायैकवचनांतपापमित्यस्य नबाधंतइत्यनेन नलिप्यतइत्यस्य तात्पर्यमुक्तमित्यवगंतव्यं । अत्रनबाधंतइत्यस्यज्ञानविघ्नकराणिनभवंतीतिवा । अंतःकरणस्याशुद्धिसंपादकानिनभवंतीतिवाऽर्थस्यविवक्षितत्वान्नापसिद्धांतादिदोषावकाशः । अतएव ततश्चज्ञानाधिकारीसभवतीत्येतद्ग्रंथोक्तः ततश्चासौज्ञाने नाधिक्रियतइतिवक्ष्यमाणश्च हेतुहेतुमद्भावःश्लिष्टोभवतीतिज्ञातव्यं । एवमन्वयेनस्वोचितकर्मणां ज्ञानसाधनत्वमुपपाद्य व्यतिरेकेणापितदुपपादनायप्रवृत्तंनान्यथेतोस्तीतिश्रुतिशेषंव्याख्याति ॥ इतइति ॥ अनेनाकुर्वंतइति

इतः कर्मकरणात् । अन्यथाकर्मनलिप्यतइतिनास्ति । भगवत्पूजामकुर्वंतंपापानिबाधंत एव । ततश्चासौज्ञानेनाधिक्रियते । अशुद्धचित्तत्वात् । अतःकर्माणिकार्याणीति ॥ ७ ॥

भाष्यमितोन्यथेत्यस्यतात्पर्यकथनरूपमित्युक्तंभवति । अक्षरार्थमुक्त्वापूर्ववत्तात्पर्यार्थमाह ॥ भगवदिति ॥ बाधंतइत्यस्यपूर्वएवार्थोद्रष्टव्यः । द्वौनञौप्रकृतमर्थंसातिशयंगमयतइतिन्यायंमनसिनिधायनञ्द्वयाभिप्रायमाह ॥ बाधंतएवेति ॥ एवमन्वयव्यतिरेकाभ्यांस्वोचितकर्मणांज्ञानार्थिनाऽवश्यानुष्ठेयत्वमुपपाद्योपसंहरति ॥ अतइति ॥ ज्ञानार्थिनेतिशेषः । कर्माणि स्वोचितानि । एतच्चश्रुतौशेषपूरणाभिप्रायेणोक्तमितिज्ञातव्यं । यद्यपि पुरुषार्थाधिकरणेनियमाच्चेतिसूत्रभाष्ययोरयंमंत्रोपरोक्षज्ञानिपरत्वेनव्याख्यातः तथाप्यस्यव्याख्यानांतरत्वान्नविरोधइतिज्ञातव्यं । ज्ञानिनोपिकर्मानुष्ठानस्यावश्यकताप्रतिपादक

मज्ञस्येतिप्रमाणंभाष्यकृद्व्याख्यानसमर्थनानुपयोगित्वादपव्याख्याननिरासेव्यापारयितुंमंत्रद्वयापव्याख्यानमनुवदति ॥ अप रइत्यादि ॥ ईशाइत्येतदीदृशब्दस्यतृतीयांतमित्यभिप्रेत्यप्रतिपदमाह ॥ ईशित्रेति ॥ वास्यमाच्छाद्यमिति ॥ वसआच्छाद नइतिधातोरितिभावः । त्यक्तेनेत्येतद्भावेनिष्ठांतमित्याशयेनोक्तं ॥ त्यागेनेति ॥ भुजपालनाभ्यवहारयोरितिधातुंमनसिनिधा

अपरेव्याचक्षते ॥ ज्ञानिनःसर्वकर्मत्यागःपूर्वमंत्रेणविहितः । यथा ईशाईशित्रापरमेश्वरे णयत्किंचजगत्यांपृथिव्यांजगदिदंतत्सर्वं वास्यमाच्छाद्यं तेनकारणेन त्यक्तेनसर्वकर्मत्यागे न भुंजीथाःपालयेथाः । एवंत्यक्तेषणस्त्वं कस्यस्विद्धनंमागृधःमाकांक्षीः । अथवा मागृधः कस्मात्कस्यस्विद्धनंनकस्यापि । अतोमिथ्याविषयेबुद्धिंमाकार्षीरिति । यस्तुनरमात्रोल्पज्ञ स्तंप्रति कर्मानेनमंत्रेणोच्यतइति । तदनुपपन्नं । अज्ञवज्ज्ञानिनोपिभगवत्पूजात्मकस्वकर्मा करणेपापलेपसद्भावेनद्वाभ्यामपितत्कर्तव्यतायाःस्मार्तत्वादितिभावेनाह ॥ अज्ञस्येति ॥

याह ॥ पालयेथाइति ॥ इतिशब्दःप्रथममंत्रार्थसमाप्तौद्वितीयमंत्रार्थंतात्पर्यतोनुवदति ॥ यस्त्विति ॥ अत्र यस्त्वनात्मज्ञ तयाप्रथममंत्रार्थग्रहणाशक्तः सोग्निहोत्रादिकर्माणिकुर्वन्नेवशतंसमाजिजीविषेत् । एवं एवंप्रकारे । त्वयिजिजीविषतिनरे इतः एतस्मात्कर्मकुर्वतोवर्तमानादन्यथाप्रकारांतरंनास्ति । येनप्रकारेणाशुभंकर्मनलिप्यते । नकर्मणालिप्यसेइतिद्वितीयमंत्रस्याप्य

भा० । अज्ञस्यकर्मलिप्येतकृष्णोपास्तिमकुर्वतः ।

क्षरार्थोद्रष्टव्यः । दूषणोपयोगित्वात्तात्पर्यार्थएवानुदितइतिज्ञातव्यं । ननुज्ञान्यज्ञानिनोःकर्मकरणस्यावश्यकताप्रतिपादनाय
प्रवृत्तेप्रमाणेउपास्तिशब्देनशास्त्राभ्यासरूपायाःध्यानरूपायावाउपास्तेर्ग्रहणेअसंगतिःस्यादित्यतोऽपेक्षिताध्याहारेणोपास्तिपदं
व्याख्याति ॥ स्वकर्मणेतिशेषइति ॥ अनेनस्वकर्मणाकृष्णोपास्तिं कृष्णपूजामितिव्याख्यातंभवति । ततश्चस्वकर्मणाकृष्णो
पास्तिमकुर्वतोऽज्ञस्यज्ञानिनोपिकर्मउपास्त्यकरणजन्यंपापंलिप्येतेतियोजनोक्ताभवति । अत्रोत्तरग्रंथानुसारेणाज्ञस्यलेपोज्ञानमो
क्षप्रच्युतिरूपोद्रष्टव्यः । ननुकृष्णोपास्तिमकुर्वतोऽज्ञस्येवज्ञानिनोपिप्रसिद्धलेपसंभवादानंदह्रासपर्यंतंधावनंभाष्येनुचितमित्यतो

कृष्णोपास्तिं स्वकर्मणेतिशेषः । नियतमोक्षत्वेन कर्मणामकिं
चित्करत्वादलेपस्यज्ञानिनःकुतःकर्मलेपइत्यतआह ॥ यतइति ॥

ऽज्ञवैलक्षण्यंज्ञानिनोदर्शयन्प्रसिद्धलेपानुपपत्तिमाह ॥ नियतेति ॥ अलेपस्य लेपायोग्यस्यज्ञानिनःकथंपापलेपः । नकथमपि।
नन्ववश्यकरणीयकर्मत्यागेकथमलेपइत्यतस्तदेवासिद्धमित्याशयेनोक्तं ॥ कर्मणामकिंचित्करत्वादिति ॥ कर्मणामावश्यक
त्वंवदताज्ञानार्थत्वंवामोक्षार्थत्वंवावाच्यं । नाद्यः । ज्ञानस्यप्राप्तत्वादित्याशयेनोक्तं ॥ ज्ञानिनइति ॥ मोक्षस्यापिप्राप्तप्रायत्वा
न्नद्वितीयोपीत्याशयेनोक्तं॥ नियतमोक्षत्वेनेति ॥ ज्ञानिनइत्यत्रापिसंबध्यते । यद्वाकर्मणामुपास्त्यकरणजन्यपापानांप्राप्तज्ञा
नत्वेननियतमोक्षत्वेनचाकिंचित्करत्वात्व्यर्थत्वादलेपस्यज्ञानमोक्षप्रच्युतिरूपलेपरहितस्यज्ञानिनःकथंकीदृशःपापलेपइतिव्या

भाष्यं । ज्ञानिनोपियतोह्रासआनंदस्यभवेद्ध्रुवं । अतोऽलेपिलेपःस्यादतःकार्यैवसासदेतिनारदीये ॥ २ ॥



ख्येयं । ननुज्ञानिनोपिकृष्णोपास्तिमकुर्वतःआनंदह्रासोभवतीत्यनुपपन्नं । ह्रासस्यपापसाध्यत्वेनकर्माकरणसाध्यत्वासंभवादि
त्यतोह्रासोभवेदित्यनूद्यततःपरमपेक्षितंपूरयति ॥ ह्रासोभवेदिति ॥ ह्रासोनामानभिव्यक्तिः । नचावरणानामपगतत्वात्कथ
मनभिव्यक्तिरितिवाच्यं । आनंदांशावरकत्वेनेश्वरेच्छायाःसत्वात् । नन्वलेपेपिलेपःस्यादित्येतद्विरुद्धमित्यतोव्यवस्थायाविरो
धंपरिहरन्वाक्यंयोजयति ॥ यतइति ॥ अतःकार्यैवेत्येतदव्यवहितप्रकृतज्ञानिमात्रपरमितिभ्रमनिरासायाह ॥ यतएवमुभ
योरिति ॥ कृष्णोपास्तिरिति ॥ स्वकर्मणाकृष्णपूजेत्यर्थः । नचज्ञानोत्तरविकर्मणएवानंदह्रासकारणतायास्तत्रतत्रोक्तत्वेन
कथंभगवत्पूजात्मककर्माकरणस्यापितत्कारणत्वमितिवाच्यं । एतत्प्रमाणतट्टीकयोरपिनिरवकाशत्वेनभगवत्पूजात्मककर्माकरण

ह्रासोभवे त्कृष्णोपास्त्यकरणनिमित्तपापेनेतिशेषः । यतोह्रासोभवेदतोमोक्षप्रच्युतिरूपलेपरहि
तेपिज्ञानिनि कर्मलेपःस्यादेव । यतएवमुभयोर्लेपोऽतोद्वाभ्यामपिसाकृष्णोपास्तिःकार्यैवेत्यर्थः ॥

स्यापितत्कारणत्वेबाधकाभावात् । उक्तंचपंचमेबृहदारण्यकभावबोधे । यावत्स्वरूपानंदाननुभवलक्षणह्रासंप्रतिविकर्मवत् भ
गवत्पूजात्मककर्माकरणमपिनिमित्तं । यथोक्तं । कृष्णोपास्तिमकुर्वतः ज्ञानिनोपियतोह्रासआनंदस्यभवेद्ध्रुवमितीति । ननु अ
ज्ञोर्चयेदेवार्चायामन्यथादोषवान्भवेत् । ज्ञस्त्वर्चयन्सगुणवानन्यथादोषवान्नत्विति चतृतीयस्कंधतात्पर्येज्ञानिनःस्वविहितकर्मा
ननुष्ठानेदोषाभावस्योक्तत्वा दत्रानंदह्रासाभिधानेकथंतद्विरोधोनस्यादितिचेत् मैवं । तत्रदोषशब्देनमुक्तिप्रतिबन्धकदोषस्यवि
वक्षितत्वेनानंदह्रासाविवक्षणात् । यद्वा तात्पर्यस्यानंदह्रासरहितोत्तमाधिकारिपरत्वेनास्यचतद्युक्तमानुषोत्तमपरत्वेनविरोधवा

र्ताभावात् । अस्यमानुषोत्तमपरत्वंतुबृहदारण्यकभावबोधेस्पष्टमिति । तात्पर्यार्थनिराकरणपरंभाष्यमुपलक्षणमित्यभिप्रेत्याक्ष रार्थमपिनिराचिकीर्षुरीशावास्यशब्दार्थंतावन्निराकरोति ॥ असंगतंचेति ॥ कथमसंगतमितिचेदित्थं । ईशावास्यत्वंहिकर्माक रणेहेतुत्वेनोच्यते । तेनेतितृतीययातस्यहेतुत्वेनपरामर्शात् । तत्रपृच्छामोवाचनिकमीशावास्यत्वमेवकर्माकरणेहेतुरुतलाक्षणिकं ज्ञानमिति ॥ आद्यंनिराकरोति ॥ नहीति ॥ तत् ईशाच्छाद्यत्वं । कुतइत्यतआह ॥ तथासतीति ॥ तत्प्रसंगेनेति ॥ क र्माकरणप्रसंगेनेत्यर्थः । स्वरूपसदीशाच्छाद्यत्वस्याज्ञंप्रत्यप्यविशिष्टत्वादितिभावः । द्वितीयेपि किमीशावास्यत्वज्ञानेलक्षणा

असंगतंचतस्येशाच्छाद्यत्वकथनं । नहितत्कर्माकरणेहेतुः । तथासत्यज्ञस्यापि
तत्प्रसंगेनोत्तरमंत्रविरोधात् । ईशावास्यत्वज्ञानोपलक्षणपक्षेप्यसंगतिरेव ।
नहिजगदीशावास्यमितिजानता कर्मनकार्यमितिनियमोस्ति । अद्वैतज्ञानम

उताद्वैतज्ञाने । आद्यमाशंक्यनिराकरोति ॥ ईशावास्यत्वज्ञानोपलक्षणत्वपक्षेपीति ॥ अनेनविषयविषयिभावलक्षणःश क्यसंबंधोपिसूचितोवेदितव्यः । तामेवोपपादयति ॥ नहीति ॥ कर्मणोह्यकर्तव्यत्वमपरमार्थत्वेनिषिद्धत्वेनिष्फलत्वेवाज्ञातेभ वितुमर्हति । नचजगदीशाच्छाद्यमितिज्ञानेनकर्मतथाज्ञातंभवति । किंतुजगदंतःपातितयेशाच्छाद्यत्वेन । नचेशाच्छाद्यत्वज्ञान मकर्तव्यताहेतुरप्रयोजकत्वादितिभावः ॥ द्वितीयमाशंकते ॥ अद्वैतज्ञानमिति ॥ अयंभावः । जगतईशाच्छाद्यत्वंनाम नघ टस्यपटेनेवप्रसिद्धं । येनकर्माकर्तव्यतायांहेतुर्नस्यात् । किंत्वीशेऽध्यस्तत्वमेव । परमार्थसत्यरूपेणपरमात्मनाऽनृतमिदंसर्वमा

च्छादनीयं । यथाचंदनागर्वादेरुदकादिसंबंधजक्लेदादिजंदौर्गंध्यंतत्स्वरूपनिर्घर्षणेनाच्छाद्यतेस्वेनपारमार्थिकेनगंधेन । तद्वदेव हिस्वात्मन्यध्यस्तमस्वाभाविकंकर्तृत्वभोक्तृत्वादिलक्षणंजगद्वैतरूपमितिपरेणोक्तत्वात् । नचाध्यस्तत्वंस्वरूपसत् कर्मांकर्तव्यत्वे हेतूकर्तुंशक्यं । अज्ञस्यापितत्प्रसंगेनोत्तरमंत्रविरोधात् । किंत्वीशेऽध्यस्तत्वेनज्ञानं । एतदेवचपरमतेऽद्वैतज्ञानंनाम । तथाच विषयवाचकेनपदेनविषयिणोऽद्वैतज्ञानस्योपलक्षणोपपद्यते । शक्यसंबंधसद्भावात् । कर्माध्यस्तत्वज्ञानंचकर्माकर्तव्यतायांमु ख्योहेतुरितिनासंगतिरिति ॥ अनेनेति ॥ ईशावास्यपदेनेत्यर्थः । कुतोनेतिचे दत्रवक्तव्यं । ईशाध्यस्तत्वंनामेशाभेदोवा ईश व्यतिरेकेणासत्वंवा यज्ज्ञानंकर्माकरणेहेतुःस्यादिति । नद्वितीयः । ईशव्यतिरेकेणासत्वोक्तावीशाधीनत्वेनाऽस्तीत्युक्तंस्यात् ।

**नेनोपलक्षितमितिचेन्न । विरोधात् । नह्याच्छाद्याच्छादकयोरभेदोदृष्टपूर्वः ।**

राजव्यतिरेकेणराष्ट्रंनास्तीत्यादौतदनुभवात् । नचेशाधीनत्वेनज्ञानंकर्माकरणेहेतुरित्यसंगतितादवस्थ्यादितिभावेनाद्यंदूषयति ॥ विरोधादिति ॥ तदुपपादयति ॥ नहीति ॥ आच्छाद्याच्छादकयोः अध्यस्ताधिष्ठानयोरित्यर्थः । ततश्चादृष्टकल्पनाप्रसं गादितिभावः । यद्यपिपरेणसर्वमेवनामरूपकर्माख्यंविकारजातंपरमार्थसत्यात्मभावनयात्यक्तंस्यादित्यादिनाद्वैतज्ञानस्यैवकर्म त्यागेहेतुत्वेनोक्तत्वात्तदेवटीकाकृतानिराकार्यं नान्यत् । अनुक्तोपालंभप्रसंगात् । तथापिशिष्याणांकथाक्रमशिक्षार्थंवा संभावित त्वाद्वा पक्षांतरनिराकरणमितिज्ञातव्यं । एवमीशावास्यपदव्याख्यानंनिराकृत्य जगत्यांपृथिव्यामित्येतदपिनिराकरोति ॥

सर्वमपीति ॥ आधारैकदेशपृथिवीवाचकजगतीशब्दस्यांतरिक्षादिसर्वाधारोपलक्षणत्वमंगीकर्तव्यं । कुतइत्यतोमुख्यार्थानुपपत्तिसद्भावादित्याशयेनोक्तं ॥ सर्वमपीति ॥ यद्यपि पृथिव्यांजगत्यामित्युपलक्षणार्थत्वादितिवदतापरेण जगतीशब्दस्योपलक्षणत्वमंगीकृतमेवेत्यंगीकर्तव्यमित्युक्तिरनुपपन्नेतिभाति । तथापि परःस्वोक्तापलापिनांप्रथमोदाहरणत्वात् नमयांगीकृतमितिवक्तुमुत्सहेतापि । अतोन्यायेनोपपादयितुमंगीकर्तव्यमित्युक्तं । यद्वा अंगीकर्तव्यमित्यतः परमंगीकृतंचपरेणेत्यध्याहारेण योज्यमितिनकश्चिद्दोषः । ननुजगतीशब्दस्यपृथिवीवाचकस्यसर्वोपलक्षणत्वेयावदाधारगताधेयलाभेनश्रौतसर्वशब्दस्वारस्यंसंपद्यते । अतएवलक्षणापिसोढव्या । वाचकत्वलोभेनप्रकृतिपरत्वेतु प्रकृत्याश्रितमात्रस्येशावास्यत्वप्राप्तावपितदनाश्रितस्यतद

सर्वमपीशावास्यमंगीकुर्वताऽवश्यंजगतीपदस्यसर्वोपलक्षणत्वमंगीकर्तव्यं । ततो
वरं प्रकृतिवाचकत्वग्रहणमेव । सर्वार्थलाभात् । नचतत्पक्षेऽस्योपयोगोस्ति ।

प्राश्यासर्वशब्दास्वारस्यप्रसंगादित्यतआह ॥ सर्वार्थलाभादिति ॥ आकाशएवतदोतंचप्रोतंचेत्यादिश्रुत्या प्रकृतेरीशातिरिक्तसर्वाधारत्वस्यप्रमितत्वेनप्रकृतिपरत्वपक्षेपितदाश्रितत्वेनसर्वार्थलाभसंभवादित्यर्थः । नचपक्षद्वयेपिसर्वार्थलाभाविशेषेपिलक्षणापेक्षयाशक्तेर्ज्यायस्त्वाज्जगतीशब्दस्यप्रकृतिपरत्वेनव्याख्यानमेवोचितंनपृथिवीपरत्वेन । तदेतदेवाभिप्रेत्योक्तं । वाचकत्वग्रहणमेवेति ॥ एवंपरपक्षेजगतीशब्दस्योपयोगमंगीकृत्यतद्व्याख्यानमेवानुपपन्नमित्युक्त मिदानींसएवव्यर्थइत्याह ॥ नचेति॥ नापीत्यर्थः । अस्यजगतीशब्दस्यतत्त्यागेप्यनेनवाक्येनसर्वस्येशाच्छाद्यत्वसिद्धेरितिभावः । अस्मत्पक्षेकिंचेत्याद्युक्तप्रकारेणोपयो ॥ २१ ॥

गोस्तीत्यभिप्रायेणतत्पक्षइत्युक्तं ॥ आत्मनेपदविरोधइति ॥ भुजोऽनवनइतिसूत्रेणभुजधातोःपालनातिरिक्तएवार्थेआत्मनेपदस्यविहितत्वात्पालनार्थत्वेतद्विरोधइत्यर्थः । अथवेत्यादिनोक्तंधनमिथ्यात्वंनिराकरोति ॥ प्रत्यक्षादीति ॥ आदिशब्देनार्थक्रियाकारित्व प्रमाणदृष्टत्वाद्यनुमानस्य विश्वंसत्यमित्याद्यागमस्यच संग्रहः । ननुवर्तमानकालेसत्वग्राहिणाप्रत्यक्षेणत्रैकालिकसत्वात्यंताभावस्याग्रहणात्कथंमिथ्यात्वस्यप्रत्यक्षविरुद्धत्वं । ग्राह्याभावावगाहिनएवविरोधित्वात् । प्रत्यक्षस्यचातथात्वादितिचेन्मैवं । प्रतिपन्नोपाधौवर्तमानकालीनसत्वग्राहिणाप्रत्यक्षेणतत्रत्रैकालिकसत्वात्यंताभावोविरुध्यतएव । तथाहि उक्तरूपमि

भुंजीथाइत्यस्यपालनार्थतायामात्मनेपदविरोधः । धनमिथ्यात्वंच प्रत्यक्षादिविरुद्धमिति ॥ २ ॥
एवंप्राप्ताधिकारंप्रति परमात्मतत्वबुभुत्साजननायासुर्याइतिमंत्रेणापरमात्मविदांनिंदाक्रियते ।

थ्यात्वप्रतिषेधोहितत्प्रतियोगिभूततत्सत्वरूपएव । सामान्याभावस्ययत्किंचित्प्रतियोगिसत्वविरोधित्वेन तत्तद्विशेषाणामेवसामान्याभावंप्रतिप्रतियोगित्वावश्यंभावात् । सामान्याभावाभावस्यचरूपद्वयं । सामान्याभावाभावत्वं तत्तद्विशेषत्वंच । तत्रप्रकृतेप्रत्यक्षस्यवर्तमानमात्रग्राहित्वेनकालत्रयवर्तिसत्वनिषेधरूपासत्वाभावत्वेनतदभावविषयत्वासंभवेपिवर्तमानकालीनबाधाभावत्वेनरूपेणतद्ग्राहकत्वमुपपन्नमेवेतितद्विरोधोदुष्परिहरइति ॥ २ ॥ असुर्याइतितृतीयमंत्रस्याधिकारांतरप्रतिपादकत्वभ्रांतिंपरमात्मतत्वप्रतिपादकत्वभ्रांतिंच परिहर्तुंप्रतिपाद्यमाह ॥ एवमिति ॥ एवं उक्तमंत्रद्वयोक्तप्रकारेणप्राप्ताधिकारंप्रत्यपरमा

उप० । असुर्यानामतेलोकाअंधेनतमसावृताः । तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः ॥ ३ ॥

त्मविदांनिंदाक्रियतइतिसंबंधः । ननुपरमात्मतत्वप्रतिपादिकेऽत्रग्रंथे नातत्वविदांनिंदाकार्या । निंदायास्तत्वप्रतिपादनरूपत्व भावात् । तदुपयोगाभावाच्चेत्यतस्तदुपयोगोस्तीत्याशयेनोक्तं परमात्मतत्वबुभुत्साजननायेति । उपदेशस्यपरार्थत्वात् बुभुत्सा वतएवचपरस्योपदेश्यत्वा त्तस्याश्चविरोधिनिंदासाध्यत्वादस्त्येवनिंदायाउपयोगइतिभावः ॥ तत्रेति ॥ मंत्रइत्यर्थः । असुर्य पदेनकथंसूर्यप्रकाशहीनत्वंलभ्यतइत्यतउक्तं वर्णविपर्ययेणेति । ह्रस्वस्योकारस्यदीर्घतयाविपर्ययेणेत्यर्थः । नन्वेवमप्यसूर्याः सूर्यहीनाःइत्यर्थःसंपद्यते । नचासौदोषइत्यतःसूर्यशब्दस्यसूर्यप्रकाशेलक्षणामभिप्रेत्योक्तं सूर्यप्रकाशहीनाइति ॥ अन्यथाप्रती

तत्रासुर्याइत्यस्य वर्णविपर्ययेणासुर्याःसूर्यप्रकाशहीनाइत्यन्यथाप्रतीतिनिरासाया
र्थमाह ॥ सुष्टुरमणेति ॥ सुष्टुरमणंसुखंसुर्यंतद्विरुद्धमहादुःख(व)त्वादसुर्याइत्यर्थः ।

तीति ॥ एतन्मंत्रव्याख्यानरूपप्रमाणविरुद्धत्वात् अंधेनतमसेत्यनेनपुनरुक्तत्वाच्चेतिभावः । भाष्येसुष्टुरमणेत्येतत्सूर्यशब्दार्थ कथनमतोनासंगतिरित्याशयेनाह ॥ सुष्टुरमणंसूर्यमिति ॥ अनेनैवसुपूर्वाद्रमेर्जमंताड्डुइतिडप्रत्ययेटिलोपेसुष्टुरमणंसुरं तद्वि रुद्धत्वादसुराइत्येवस्यान्नत्वसुर्याइतिचोद्यंपरिहृतंभवति । बाहुलकड्यप्रत्ययांतत्वेनडांतत्वाभावात् ॥ तद्विरुद्धमहादुःखत्वा दिति ॥ बहुव्रीहिरयं । दुःखवत्त्वादित्यपिपाठः । अनेनासूर्यशब्दान्मत्वर्थेअर्शआद्यच्प्रत्ययइत्युक्तंभवति ॥ यद्यप्यत्र यथाश्रुत भाष्यानुसारेण सुष्टुरमणंसुर्यं तद्विरुद्धत्वादसुर्याइत्येववक्तव्यं । तथापिदुःखस्यैवसुष्टुरमणविरुद्धत्वंसाक्षात् । नतुलोकानामि ॥ २२ ॥

भा० । सुष्टुरमणविरुद्धत्वादसुराणांप्राप्यत्वाच्चासुर्याः ।

त्याशंकापरिहारायमहादुःखैकहेतुत्वादितिवक्ष्यमाणप्रमाणानुसारेण असुर्यान्नामलोकान्नित्यनिरतिशयदुःखानितिदशमभागवततात्पर्यानुसारेणचतद्विरुद्धमहादुःखवत्त्वादितिव्याख्यातमितिज्ञातव्यं । नन्वसुरप्राप्यत्वस्यस्वर्गादिसाधारण्यात्कोविशेषस्तमसइत्यतो नचरमंतीत्युदाहरिष्यमाणप्रमाणं असुर्यान्नामलोकान्निरस्तसमस्तसुखानितिभागवततात्पर्यंचमनसिनिधायविवक्षितमर्थमाह ॥ असुराणांप्राप्यत्वादित्यनेनेति ॥ भाष्यंतु असुरशब्दोपपदाद्याप्रापणइत्यस्माद्धञर्थेकविधानमितिकर्मणिकप्रत्ययेआतोलोपइटिचेत्यकारलोपेनिर्वचनत्वात्पूर्वपदांत्यलोपेचनिष्पन्नासुर्यशब्दार्थकथनमात्रपरमितिद्रष्टव्यं । ननुप्रमाणेरमणा असुराणांप्राप्यत्वादित्यनेन सकलसुखराहित्यमुपलक्ष्यते । कुतोयमसुर्यपदार्थइत्यतआह ॥ नचेति ॥ एतमेवमंत्रंमूलीकृत्यप्रवृत्तेऽस्मिन्वाक्येऽसुर्यपदार्थवर्णनं नचरमंतीतिक्रियते । भावोक्तावपिअसुर्यपदार्थत्वेनानुक्तत्वात्कथमुक्तशंकापरिहारइत्यतआह ॥ असुर्यपदार्थवर्णनमिति ॥ भागवतवाक्ये नचरमंतीत्यनेनासुर्यपदार्थवर्णनंक्रियते यतोऽतोऽयमसुर्यपदार्थइत्यर्थः । तत्रासुर्यपदार्थवर्णनस्यकासंगतिरित्यतउक्त मेतमेवमंत्रमिति ॥ श्रुतिगीतिकायां नचरमंतीत्येतद्भागवतवाक्यमूलत्वेनतात्पर्येभगवत्पादैरसुर्यानामेतिश्रुतेःपठितत्वादेतमेवमंत्रंमूलीकृत्येत्युक्तं । भागवतस्यमंत्रमूलत्वंनाम मंत्रसंवादित्वमेव नतुमंत्रतोर्थमुपलभ्यरचितत्वं । स्वतःसर्वज्ञत्वाद्भागवतकृतइतिज्ञेयं । नन्वेवमप्यसुर्यपदार्थत्वेनोक्तयोर्द्वयोर्मध्येऽसुरप्राप्यत्वादित्युक्तार्थस्यप्रामाणिकत्वलाभेपिसुष्ठुरमणविरुद्धत्वादित्यस्यनतल्लाभइत्य

 भा० । नचरमन्त्यहोअसदुपासनयात्महनइत्युक्तत्वात् ।

तोनुभवंतिच । नित्यदुःखमितिचशब्देनोक्तमितिभागवततात्पर्यंमनसिनिधायप्रमाणेचशब्दार्थमाह ॥ तत्रेति ॥ नचरमंतीति भागवतवाक्यइत्यर्थः । ननुभागवतोक्तरीत्याअसुर्यशब्दस्यमहादुःखसुखाभावपरत्वेपिसुष्ठुरमणेत्याद्युक्तासुर्यपदाक्षरयोजनायां नकिमपिनियामकंपश्यामः । योजनांतरेणापिउक्तार्थद्वयलाभसंभवादित्यतोऽसिद्धंतदित्याह ॥ महादुःखेति ॥ महादुःखपरता सुखाभावपरताचेत्यर्थः ॥ उक्तव्याख्यानएवेति ॥ सुष्ठुरमणेत्याद्युक्तव्याख्यानएवेत्यर्थः । नन्वसुर्यपदार्थवर्णनस्याप्रामाणिकत्वशंकायाः नचरमंतीत्येतावतैवनिरासादवशिष्टप्रमाणोदाहरणंव्यर्थमित्यतःश्रुतौशंकांतरनिरासार्थत्वात् नतदितिभावे

तत्र चशब्देनमहादुःखमनुभवंतीत्येषोर्थःसमुच्चीयते । महादुःखसुखाभावपरताऽस्यपदस्योक्तव्याख्यानएवसंभवतिनान्यथेतिभावः । आत्मनोनित्यत्वेन हननासंभवात्तत्रानर्थकथनमयुक्तमित्येतदप्यनेनपरिहृतं । असदुपासनयाआत्महनइतिव्याख्यातत्वात् । विपरीतंभावयताहितद्याथात्म्यंतिरस्कृतमितितस्यगौण्यावृत्त्याऽऽत्महंतृत्वं ।

नाह ॥ आत्मनइति ॥ उक्तत्वमात्रस्योक्तशंकानिरासकत्वाभावादाह ॥ व्याख्यातत्वादिति ॥ असदुपासनयेत्यनेनआत्महंतृत्वस्यव्याख्याततत्वादित्यर्थः । घटादीनामिवात्मनःस्वरूपेणहननानंगीकारान्नोक्तशंकावकाशइतिभावः । नन्वेवंतर्हिअसदुपासकेष्वात्महंतृशब्दप्रयोगानुपपत्तिः । तन्निमित्तात्मविनाशकत्वाभावादित्यतोगौण्यावृत्त्याप्रयोगइत्याशयेनगुणयोगंदर्शयति ॥ विपरीतमिति ॥ आत्महंतृत्वं आत्महंतृशब्दप्रतिपाद्यत्वं । स्वरूपतिरस्कर्ताहिमुख्यहंतोच्यते । असदुपासकस्त्वात्मयाथा



त्म्यस्यतिरस्कर्ता तिरस्काररूपगुणयोगाद्धंतृशब्देनोपचर्यतइतिभावः ॥ स्पष्टमिति ॥ अतोनपूर्वेणगतार्थतेतिभावः । पूर्वप्रमाणस्यासुर्यपदार्थकथनरूपतायाएतमेवमंत्रंमूलीकृत्येत्याद्युपपादनसापेक्षत्वादस्पष्टत्वं । अत्रचासुर्यानामेतिकंठतउक्तत्वात्स्पष्टत्वमितिभावः । असुरैःप्राप्यत्वादित्येतत्स्ववचनभाष्यवद्व्याख्येयं ॥ अत्रेति ॥ भाष्यकृदुक्तासुर्यपदार्थइत्यर्थः ॥ अत्रेति ॥ आत्महनइतिमंत्रइत्यर्थः ॥ इतिचेति ॥ नकेवलमसुर्यपदार्थउक्तइतिचशब्दार्थः ॥ आत्मशब्दस्यहरिपरत्वेविवादाभावात्किं

स्पष्टंचात्रप्रमाणमाह ॥ महादुःखेति ॥ विमुखाहराविति समाख्ययाऽत्रात्मशब्दो हरिपरइतिचोक्तंभवति । तथाच नित्यशुद्धबुद्धमुक्तस्वरूपमात्मानंजीवंयेविपरीतंप्रतिपद्यंते तेआत्महनइत्यपव्याख्यानमेव । तेलोकाइतितच्छब्दःप्रसिद्धिद्योतकः ।

व्याख्यानेनेत्यतआह ॥ तथाचेति ॥ नित्यशुद्धबुद्धमुक्तस्वरूपं तदात्मकब्रह्मस्वरूपं । यद्यपिनैवंप्रकारेणकण्ठतोव्याख्यातं । किंतुआत्मानंघ्नंतीत्यात्महनः । कथमात्मानंनित्यंहिंसंति । अविद्यादोषेणविद्यमानस्यात्मनस्तिरस्करणादित्याद्येवोक्तं । तथापि तत्तात्पर्यानुवादोवा । अपव्याख्यातॄणामनेकत्वादन्येनैवंव्याख्याततत्वाद्वैवमनुवादइतिज्ञेयं । ननुतान्यांतीत्येतावतासमंजसत्वादाद्यस्तच्छब्दोव्यर्थइत्यतआह ॥ तच्छब्दइति ॥ द्वितीयतच्छब्दभ्रांतिंपरिहर्तुंतेलोकाइतीत्यनुवादः । तर्हितेप्रसिद्धा

भा० । महादुःखैकहेतुत्वात्प्राप्यत्वादसुरैस्तथा । असुर्यानामतेलोकास्तान्यांतिविमुखाहराविति वामने ।

स्तान्यांतीत्यनन्वयदोषइत्यतोयच्छब्दाध्याहारेणतंदर्शयन्नर्थमाह ॥ येतेप्रसिद्धाइति ॥ तइत्यनुवादेनप्रसिद्धाइतिव्याख्यानं। ततश्चयच्छब्देनतेषांप्रसिद्धिंविधाय तानित्यनेनप्रसिद्धाननूद्य यांतीतिविधीयते। येलोकास्तेप्रसिद्धाः तान्प्रसिद्धान्यांतीत्युक्तं भवति। ननुतमसोंधत्वहेतुत्वेपिनस्वयमंधत्वमचेतनत्वात्। तत्कथमंधेनेतितमसोविशेषणंश्रुतावित्यतोंतर्णीतणिच्त्वेनांधत्व हेतुत्वस्यैवविवक्षितत्वान्नदोषइत्याह ॥ अंधयतीत्यंधमिति ॥ ननुतमसोनंधस्याप्रसिद्ध्याव्यर्थंविशेषणमित्यतः सिद्धेसत्यारं

येतेप्रसिद्धास्तान्यांतीत्यर्थः। येआत्महनस्ते केचनतांल्लोकानभिगच्छंति केचननेत्यन्य थाप्रतीतिनिरासायाह ॥ येकेचेति ॥ येकेचात्महनस्तेसर्वेपीत्येवंनियमपरमेवेदं नतू क्तप्रकारेणविभागपरमित्यर्थः। कुतइत्यतआह ॥ नियमेनेति ॥ नियमेनेत्यस्यैव विवरणंसर्वेपीति। अंधयतीत्यंधं। अतिनिबिडांधकारावृताइत्यर्थः। प्रेत्यमृत्वा।

भोनियमार्थइतिन्यायंमनसिनिधायतदभिप्रायंवदंस्तमसावृताइत्येतद्व्याचष्टे ॥ अतिनिबिडेति ॥ अनेनांधेनादर्शनात्मकेनत मसाअज्ञानेनावृताइतिपरव्याख्यानमपहस्तितंभवति। लोकशब्दस्यशरीरपरत्वेहिकथंचित्तदुपपद्येत। नचतदस्ति। उत्तरवा क्येनैवतस्यनिराकरिष्यमाणत्वात्। प्रसिद्धलोकानांचाज्ञानावृतत्वस्यबाधितत्वादिति। लक्ष्मणःप्रेत्यसुग्रीवंबभाषेरामचोदित मित्यादौप्रेत्येत्यस्यप्राप्तावपिप्रयोगाच्छ्रुतौतदर्थत्वभ्रांतिपरिहारायतदनूद्यव्याचष्टे ॥ प्रेत्यमृत्वेति ॥ भाष्यकृतोऽपव्याख्यान ॥ २४ ॥

---

भा०। येकेचेत्यनेननियमउक्तः। नियमेनतमोयांतिसर्वेपिविमुखाहराविति च ॥ ३ ॥

निराकरणाभावप्रयुक्तांन्यूनतापरिहरति॥ एवमुदाहृतेति ॥ देवादिशरीराणीति ॥ इयमत्रपरव्याख्या । अथेदानीमविद्वन्निं दार्थोयंमंत्रआरभ्यते। असुर्याःपरमात्मभावमद्वयमपेक्ष्यदेवादयोप्यसुराः। तेषांसंभूताःअसुर्याः । तेलोकाः। कर्मफलानिलोक्यं तेदृश्यंतेभुज्यन्तेइतिजन्मानिब्रह्मादिदेहाः अंधेनादर्शनात्मकेनाज्ञानेनतमसाआवृताःआच्छादिताःतान्स्थावरान्प्रेत्यइमंदेहंत्य क्त्वाऽभिगच्छंतियथाकर्मयथाश्रुतमिति ॥ ३ ॥ उत्तरमंत्रस्याप्युपोद्धातत्वभ्रांतिंपरिहरन्अनुष्ठानोपयोगितयावृत्तमंत्रत्रयार्था

एवमुदाहृतवचनविरोधादेव देवादिशरीराण्यसुर्यालोकाइतिव्याख्यानमयुक्तमेवेति ॥३॥
एवंनिवृत्तकर्मणाविशुद्धाशयस्यैहिकामुष्मिकाशेषविषयेभ्योव्यावृत्तस्ये श्वरतत्वबुभुत्सा
वतः कोसावात्मा यद्विपरीतोपासनमसुर्यलोकप्राप्तिसाधनंस्यादित्यपेक्षायां परमात्मतत्वो
पदेशःक्रियते ॥ अनेजदित्यादिना ॥ तत्राद्यंमंत्रमन्यथाप्रतीतिनिरासायस्मृत्यैवव्याचष्टे ॥

नुवादेनावसरसंगतिप्रदर्शनपूर्वकंवर्तिष्यमाणमंत्रसंदर्भमवतारयति ॥ एवमित्यादिना ॥ आशयस्येत्यंतेनद्वितीयमंत्रस्यार्थोऽ नूदितः । व्यावृत्तस्येत्यंतेनप्रथमस्य वैराग्यंप्रतिनिवृत्तकर्मणामंतःकरणशुद्धिद्वाराहेतुत्वज्ञापनायक्रमोल्लंघनं । बुभुत्सावतइत्यं तेनतृतीयस्य अपेक्षायामित्यंतेनावसरसंगतिरुक्ता । अवशिष्टेनोत्तरमंत्रसंदर्भप्रतिपाद्यमुक्तमितिज्ञातव्यं ॥ तत्रेति ॥ उत्तरमं त्रसंदर्भइत्यर्थः ॥ अन्यथाप्रतीतिनिरासायेति ॥ एतदुभयमुत्तरटीकायांस्पष्टं । स्मृत्यैवेत्यवधारयतालाघवंसूचितं । प्रथ

---

उप० । अनेजदेकंमनसोजवीयोनैनद्देवाआप्नुवन्पूर्वमर्षत् । तद्धावतोन्यानत्येतितिष्ठत्तस्मिन्नपोमातरिश्वादधाति ॥ ४ ॥

मंस्ववचनेनव्याख्यायतत्रप्रमाणोपन्यासेगौरवंस्यादितिभावः । तच्छब्दत्रयंविशेष्यसमर्पकंसर्वत्रान्वेतीतिभावेनाद्यमनूद्यव्याच
ष्टे ॥ तदिति ॥ उत्तरंद्वयमप्येवमेवव्याख्यातव्यमितिभावः । निर्भयत्वादित्यादिहेतूनामेकमित्यादिनान्वयभ्रांतिंपरिहरन्हे
त्वनुवादेनसाध्यसंबंधंदर्शयति ॥ निर्भयत्वादेवेति ॥ अपव्याख्याननिराकरणस्यभाष्यारूढत्वार्थमचिंत्यशक्तितश्चैवेत्येवश
ब्दस्यसर्वैःपंचम्यंतैःसंबंधमभिप्रेत्यात्रसंबंधोदर्शितः । एवमुत्तरत्रापिद्रष्टव्यं ॥ अनेजदिति ॥ अनेजदित्युच्यतइत्यर्थः । एक
मित्यप्येवंव्याख्येयं । निर्भयत्वादीनांशब्दवाच्यत्वएवहेतुत्वात् । अतएवोत्तरत्रागम्यमुच्यतेइत्याद्युक्तं । एजृकंपनइतिधातुंमन

अनेजदिति ॥ तत्परमात्मस्वरूपंनिर्भयत्वादेवानेजत् । अकंपमानं नतुनिष्क्रियत्वा
त् । प्राधान्यतएवचैकं नतुद्वितीयवस्तुरहितत्वात् । तथाशब्दोविशेषणसमुच्चये ।

सिनिधायाह ॥ अकंपमानमिति ॥ अवधारणव्यावर्त्यतयाअपव्याख्यानंदर्शयति ॥ नतुनिष्क्रियत्वादिति ॥ एवमुत्तर
त्रापिज्ञातव्यं । उपमार्थत्वासंभवादाह ॥ तथाशब्दोविशेषणसमुच्चयइति ॥ समुच्चयइत्येवोक्ते नकेवलंनिर्भयत्वादनेजत्
तथाएकमितिविशिष्टसमुच्चयःप्रतीयेत । सचायुक्तः । निर्भयत्वस्यैकशब्दवाच्यत्वेनिमित्तत्वासंभवात् । अतोविशेषणसमुच्चय
इत्युक्तं । नकेवलमनेजत्तथाएकमितिविशेषणसमुच्चयइत्यर्थः । मनसोजवीयइत्येतत्प्रमाणेअव्याख्यातत्वात्स्वयंव्याचष्टे ॥ ॥ २५ ॥

भा० । अनेजन्निर्भयत्वात्तदेकंप्राधान्यतस्तथा । सम्यग्ज्ञातुमशक्यत्वादगम्यंतत्सुरैरपि ।

मनसोपीति ॥ श्रौतक्रमानुसारेणात्रव्याख्यातमित्यवगंतव्यं । मनोग्रहणस्याभिप्रायमाह ॥ मनोहीति ॥ सम्यगिति ॥
साकल्येनेत्यर्थः । ननुप्रमाणेतत्सुरैरगम्यमुच्यतइतिसाध्यकथनमयुक्तं । श्रुतौ नैनद्देवाआप्नुवन्नित्युक्तत्वेनतद्विसंवादप्रसंगादि
त्यतस्तदर्थानुवादरूपत्वान्नदोषइतिभावेननैनद्देवाआप्नुवन्नितीत्युक्तं । नैनद्देवाआप्नुवन्नित्यनेनतत्सुरैरगम्यमुच्यतइत्यर्थः । अत्र
देवाःएनत्परमात्मस्वरूपंमनआदिभिर्नाप्नुवन्नितियोजनयाश्रुतौगमेरवगमार्थत्वेन भाष्येचदेवाज्ञेयत्वमुच्यते नतुदेवाप्राप्यत्वं ।
सम्यग्ज्ञातुमशक्यत्वादितिहेतुकथनेन । नतुसर्वथाऽगोचरत्वादित्यपव्याख्याननिराकरणेनचविरोधप्रसंगादितिज्ञातव्यं । एव

मनसोपिजवीयोवेगवत्तरं । मनोहिवेगवत्प्रसिद्धं । सम्यग्ज्ञातुमशक्यत्वादेवनैनद्देवाआप्नुवन्नितितत्सुरैरप्य
गम्यमुच्यते । नतुसर्वथाऽगोचरत्वात् । पूर्वमर्षदित्यस्यव्याख्यानंस्वयंतुसर्वानिति । अगमत्व्यजानात् ।

शब्दव्यावर्त्यतयाऽपव्याख्यानंदर्शयति ॥ नतुसर्वथाऽगोचरत्वादिति ॥ एवंहिपरेषांव्याख्या । द्योतनाद्देवाश्चक्षुरादींद्रि
याणि एनत् प्रकृतपरमात्मतत्वं । नाप्नुवन् ज्ञापनायनाप्नुवंतीति । टीकायांसर्वथाअगोचरत्वादित्युक्तिरर्थानुवादइतिज्ञातव्यं ।
गमेर्गत्यर्थतायामृषज्ञानइत्युत्तरभाष्यविरोधप्रसंगादवगत्यर्थमाह ॥ व्यजानादिति ॥ ननुप्रमाणेस्वभावतइतिव्यर्थं श्रुत्यननु
गुणंच । नचपूर्वमेवेतिश्रौतपदव्याख्यानरूपत्वान्नदोषइतिवाच्यं । तथासतिपूर्वमेवेत्यस्यवैयर्थ्यप्रसंगादित्यतोव्याख्येयपदानु

भा० । स्वयंतुसर्वानगमत्पूर्वमेवस्वभावतः । अचिन्त्यशक्तितश्चैवसर्वगत्वाच्चतत्परं । द्रवतोत्येतिसंतिष्ठत्तस्मिन्कर्माण्यधान्मरुत् ।

वादरूपत्वान्नतदित्याशयेनाह ॥ पूर्वमेवेत्यनुवादेनेति ॥ नचश्रुतावेवशब्दाभावात्प्रमाणेकथंपूर्वमेवेत्यनुवादइतिवाच्यं । स्वभावतइत्यर्थलाभायसर्ववाक्यंसावधारणमितिन्यायेनाध्याहृतावधारणस्यानुवादोपपत्तेः । सावधारणत्वेहिपूर्वमेवनत्वागंतुकस्येत्युक्त्यास्वभावइत्यर्थलाभसंभवादितिभावः । एतदर्थमेवचानुवादइतिज्ञातव्यं ॥ अचिंत्यशक्तितश्चेति ॥ इयमत्रयोजना तत्परंब्रह्मद्रवतोन्यानत्येतीत्युच्यतइत्यत्रसर्वगतत्वमेवहेतुः । नत्वचिंत्यशक्तिरपि । गगनादीनामिवसर्वगतत्वमात्रनिर्वाह्येऽचिंत्यशक्त्यनपेक्षणात् । सर्वगत्वात्सदूरेचेतिवक्ष्यमाणप्रमाणानुरोधाच्च । संतिष्ठत्द्रवतोन्यानत्येतीत्युच्यतइत्यत्राचिंत्यशक्तितइतिहेतुः । तिष्ठतोद्रवदतिक्रमणस्यलोकविरुद्धत्वेनसर्वगतत्वानिर्वाह्यस्याचिंत्यशक्त्यपेक्षणात् । ऐश्वर्यादेवासीनोदूरंव्रजती

पूर्वमेवेत्यनुवादेनस्वभावतइतिविवरणं । अचिंत्यशक्तितश्चसर्वगतत्वाचतत्परंब्रह्म संतिष्ठत्द्रवतोऽन्यानत्येतीत्युच्यते । नत्वन्यस्यकल्पितत्वात् । अपइत्यस्यव्याख्यानंकर्माणीति॥आसमंतात्पालयंतीतिकर्माण्यापः ।

त्यादि । आसीनोदूरंव्रजतिशयानोयातिसर्वतः । ऐश्वर्याद्भगवान्विष्णुर्विरुद्धंघटयत्यसावितिकाठकभाष्योक्तेश्च । नचैवंहेतुद्वयस्यभिन्नसाध्यकत्वे चशब्दानुपपत्तिः । हेतुसमुच्चयमात्रेचशब्दांगीकारात् । अत्राचिंत्यशक्तितः सर्वगतत्वादित्युभयं नत्वित्यपव्याख्याननिरासलाभायसावधारणंव्याख्येयं । पूर्वन्यायेनसिद्धत्वादचिंत्यशक्तितश्चैवेत्यवधारणसद्भावाच्चटीकायांनोक्तमितिज्ञातव्यं । श्रुतिभाष्ययोर्विसंवादंपरिहरति ॥ अपइत्यस्येति ॥ यद्यप्यत्रापइतिनाप्शब्दस्यद्वितीयाबहुवचनांतं । तस्यकर्मवाचकत्वासंभवात् । तद्धिरूढ्यायोगेनवा । नाद्यः । वेदनिघंटौपकारांतस्याप्शब्दस्यकर्मनामस्वपठितत्वात् । अपःअप्नःदं

सः वेपइत्यादीनिकर्मनामानीतिसकारांतस्यैवापःशब्दस्यकर्मनामसुपठितत्वाच्च । टीकाकृतापि दक्षंदधातेअपसमित्यस्यामृचि कर्मापसंचकर्तारमितिभाष्यव्याख्यानावसरे अपसंकर्मेतिऋक्पदभाष्यपदयोःसंबंधंप्रदर्श्यतदुपपादनायापःशब्दःकर्मनामेत्युक्तत्वाच्च । नद्वितीयः । उणादिवृत्तौआप्नोतेर्ह्रस्वश्च आप्लृव्याप्तावित्यस्मात्क्विप्प्रत्ययेह्रस्वेचकृतेनिष्पन्नस्यापूशब्दस्यांभोवाचित्वमित्युक्तत्वेनांभसियोगेपिकर्मणितदभावात् । तथापि विश्वेदेवासोअप्तुरइत्यस्यामृचि अप्तुरःकर्मवेगिनइतिभाष्यव्याख्यानावसरेटीकायामप्शब्दःकर्मवाचीत्युक्तत्वेनात्रापिपकारांतस्यैवाप्शब्दस्यग्रहणोपपत्तेः । नचयोगरूढ्योरभावः । उणाद्यनुसारेणयोगोपपत्तेः । नचतत्रांभोवाचित्वमित्युक्तत्वेनकर्मणियोगासंभवइतिवाच्यं । प्रयोगानुसारेणांभोवाचित्वमित्युणादिवृत्तेःकर्मवा

सर्वैःक्रियमाणानिकर्माणितस्मिन्नर्पितवानित्यर्थः ।

चित्वोपलक्षणत्वोपपत्तेः । कर्मणामपिप्रतिपुरुषंव्याप्तत्वात् । अथवाआङ्पूर्वात्पारक्षणइत्यस्मात्क्विपिनिर्वचनत्वादाङोह्रस्वत्वेचनिष्पन्नस्याप्शब्दस्यकर्मवाचित्वेबाधकाभावात् । नह्युणादिवृत्त्यनुसारेणैवयोगोंगीकार्यइतिनिर्बंधेकारणमस्ति । अतएवानुव्याख्यानेआपआपालनाच्चेत्युक्तं । एतदेवाभिप्रेत्यटीकायां आसमंतात्पालयंतीतियोगप्रदर्शनंकृतमितिज्ञातव्यं । ननुकर्मणांभगवत्याधानंनामभगवतिसमर्पणमेवनान्यत् । सर्वांतांहरयेर्पयदित्युत्तरप्रमाणानुरोधात् । तत्रकिंमातरिश्वा स्वकृतानिकर्माण्यर्पितवानुत सर्वैःक्रियमाणानि । नाद्यः । तस्यभगवद्भक्तमात्रसाधारणत्वेनविशिष्यमातरिश्वनस्तत्कथनानुपपत्तेः । नद्वितीयः । अन्यदीयस्यकर्मणोअन्येनसमर्पणानुपपत्तेरित्यतोद्वितीयपक्षांगीकारपरत्वेनभाष्यंव्याचष्टे ॥ सर्वैःक्रियमाणानीति ॥ अत्र

समर्पणंनाम सर्वकर्मणांभगवत्कर्तृत्वेनतत्पूजात्वेनतद्भक्तिप्रसादफलकत्वेनानुसंधीयमानत्वं । यथोक्तं गीतातात्पर्यनिर्णये । ना
हंकर्ताहरिःकर्तातत्पूजाकर्मचाखिलं । तथापिमत्कृतापूजातत्प्रसादेननान्यथा । तद्भक्तिःतत्फलंमह्यंतत्प्रसादःपुनःपुनः । कर्म
न्यासोहरावेवंविष्णोस्तुष्टिकरःसदेति । अनेन मातरिश्वाऽपःकर्माणिअग्न्यादीनांज्वलनदहनप्रकाशनाभिवर्षणादीनि दधाति
विभजतिधारयतिचेत्यपव्याख्यानंनिरस्तंभवति। इदानींद्वितीयपक्षोक्तदोषपरिहारायोत्तरंभाष्यंव्याख्यातुंतमेवदोषमाशंकते ॥
अन्यकर्माणीति ॥ अन्यकृतकर्माणीत्यर्थः । अन्यथासर्वेषामपितत्स्यादविशेषादितिभावः । सर्वैःक्रियमाणाचेष्टाकथंमारुती

अन्यकर्माणिकथंमातरिश्वाऽर्पयेदित्यतआह ॥ मारुतीति ॥ यतःसर्वाचेष्टामरुत्प्रेरणयोत्प
न्नत्वान्मारुतीअतस्तांहरये हरावर्पयेदित्युक्तमित्यर्थः । अर्षदित्येतदगमदितिव्याख्यातं ।

स्यात् बाधादित्याशंकांपरिहरन्नपेक्षिताध्याहारपूर्वकंभाष्यंयोजयति ॥ यतइति ॥ अन्येषाममुख्यकर्तृत्वेपिप्रेरकत्वाद्वायोरेव
मुख्यकर्तृत्वमतोनबाधोनाप्यविशेषइतिभावः। यद्यप्यासमंतात्पालयंतीतिपूर्वोक्तव्युत्पत्त्या सत्कर्मणामेवपालकत्वादपूशब्दार्थत्वं
प्रतीयते । तथापि सर्वैःक्रियमाणानिकर्माणितस्मिन्नर्पितवान् यतःसर्वाचेष्टामरुत्प्रेरणयोत्पन्नेत्यादिटीकानुसारेण मारुत्येवयत
श्चेष्टासर्वेत्यादिभाष्यानुसारेणचोपलक्षणत्वेनासत्कर्मणामप्यपूशब्दार्थत्वंज्ञातव्यं । तेषांभगवदर्पणंनामतत्कर्तृकत्वेनानुसंधान

भा० । मारुत्येवयतश्चेष्टासर्वातांहरयेऽर्पयेदितिब्रह्मांडे ।



मितिज्ञातव्यं ॥ तन्मूलभूतमिति ॥ व्याख्यानमूलभूतमित्यर्थः ॥ धातुसूत्रमपीति ॥ आगमस्यस्वयंप्रमाणत्वादपिश
ब्दः । धातुसूत्रापठनेगमेर्ज्ञानार्थत्वंनज्ञायेत । सम्यग्ज्ञातुमशक्यत्वादितिपूर्ववाक्यार्थपर्यालोचनयातज्ज्ञानसंभवेपि प्रतिपत्ति
गौरवप्रसंगादितिभाष्यकृतोभावःस्फुटत्वान्नवर्णितइतिबोध्यं । यद्यपिकाशिकायांऋषीगतावितिधातुंपठित्वाईदित्त्वादेवहिऋष्टइ
त्यादौश्वीदितोनिष्ठायामितिनिष्ठायाअनिट्त्वमुक्तं । धातुपाठेपि ऋषीगतावितिईदित्त्वेनगत्यर्थकएवधातुःपठ्यते नतुऋषज्ञानइ
ति । तथापि गत्यर्थस्यऋषतेर्ज्ञानार्थत्वमुक्तानुबंधत्वंचाभिप्रेत्यभाष्येऋषज्ञानइतिधातुःपठितइतिद्रष्टव्यं । यद्वासर्वज्ञभाष्यकृत्प्र

तन्मूलभूतंधातुसूत्रमपिपठति ॥ ऋषज्ञानइति ॥ अनेजदित्या
देर्निष्क्रियत्वाद्यर्थकल्पने मनसोजवीयइत्यादिविरोधश्च ।

योगानुसारेणऋषज्ञानइत्यपिधातुरस्तीतिज्ञातव्यं । अपव्याख्यानेप्रमाणविरोधपरंभाष्यमुपलक्षणमित्याशयेनांतरंगानुपपत्तिम
प्याह ॥ अनेजदित्यादेरिति ॥ अत्राद्येनादिशब्देनएकमित्यादे र्द्वितीयेनाद्वितीयत्वादे स्तृतीयेनतद्धावतोन्यानित्यादेर्ग्रहणं
॥ ४ ॥ ततश्चायमर्थः ॥ अनेजदित्यस्यनिष्क्रियार्थत्वेसक्रियत्वप्रतिपादकेनमनसोजवीयइत्यनेनविरोधः । एकमित्यस्यद्विती
यराहित्यार्थत्वे तद्धावतोन्यानित्याद्यन्यसद्भावप्रतिपादकविरोधः । नैनद्देवाआप्नुवन्नित्यस्यसर्वथाइंद्रियागोचरत्वार्थत्वेयत्तेरूपं
कल्याणतमंतत्तेपश्यामीतिदर्शनप्रार्थनविरोधः। एवमन्यत्रापिविरोधोद्रष्टव्यःइति । ननुनिरुपाधिकचैतन्यस्यनिष्क्रियत्वंसर्वेंद्रिया

भा० । ऋष ज्ञाने ॥ ४ ॥

गोचरत्वंचोच्यते। सक्रियत्वमिंद्रियगोचरत्वंचसोपाधिकस्य। मनसोजवीयइत्यस्यांतःकरणावच्छिन्नचैतन्यपरत्वेनयत्तेरूपमित्यादेरादित्यपरत्वेनपरेणव्याख्यातत्वादेवंपरमार्थापेक्षयाऽद्वितीयत्वंव्यावहारिकापेक्षयान्यप्रतिपादनमित्यतोनकोपिविरोधइत्याशंक्यपरिहरति ॥ नचेति ॥ सोपाधिकेत्याद्युपलक्षणं पारमार्थिकत्वव्यावहारिकत्वेनेत्यपिद्रष्टव्यं। कुतोनेत्यतआह ॥ मुख्यार्थेति ॥ निरुपाधिकचैतन्यस्याकल्पितत्वेनमुख्यत्वात् सोपाधिकस्यकल्पितत्वेनामुख्यत्वा दस्मदुक्तन्यायेनसर्वस्यमुख्यब्रह्मपरत्वसंभवेनमनसोजवीयइत्यादेःकल्पितामुख्यचैतन्यार्थत्वायोगात्। व्यावहारिकस्यापिकल्पितत्वेनामुख्यतया तद्धावतोन्यानित्यादेरस्मदुक्तन्यायेनाकल्पितमुख्यार्थत्वसंभवेअमुख्यार्थत्वायोगादित्यर्थः। उपलक्षणमेतत्। एवशब्दस्यपरमार्थद्वितीयराहि

**नचसोपाधिकनिरुपाधिकत्वेनव्यवस्था। मुख्यार्थसंभवेऽमुख्यार्थायोगात्।**

त्यार्थत्वे याथातथ्यतोर्थानित्यादिविरोधः। तत्रमहदादीनांयाथातथ्यतइत्यनेनपरमार्थत्वस्योक्तत्वादित्यपिद्रष्टव्यं। यद्वा अमुख्यार्थायोगादित्यस्यलक्ष्यार्थायोगादित्यर्थः। अनेजदेकमित्यादेर्निरुपाधिकचैतन्यपरत्वंवदतापरेणलक्षणायाअंगीकर्तव्यत्वादंगीकृतत्वाच्चेतिव्याख्यातव्यं। ननुनलक्षणांगीकारएवदोषः। तथासतिकुत्रापिसानस्यादित्यतउक्तं मुख्यार्थसंभवइति ॥ अस्मदुक्तरीत्यावाच्यार्थसंभवइत्यर्थः। नन्वपव्याख्यानइवभाष्यकृद्व्याख्यानेप्यस्त्यनुपपत्तिः। तथाहि। अनेकपदात्मकवाक्यश्रवणादनेकार्थप्रतीतावपिवाक्यस्यतावदेकत्रतात्पर्यंकल्प्यं। अन्यथैकवाक्यत्वासंभवात्। यत्परःशब्दःसशब्दार्थइतिचशाब्दाः। ॥ २८ ॥ वाक्यतात्पर्यविषयश्चसएव। यत्प्रतिपादनेनवाक्यपर्यवसानं यत्प्रतिपादनायचपदांतरोपादानं। तथाभूतश्चकार्यात्मैव। नहि

गौरश्वः पुरुषोहस्तीतिवा देवदत्तःपचतीतिवा वाक्यंपर्यवसितमनुभूयते । किंतुदेवदत्तगामानयेत्यादिकार्यनिष्ठमेव । अतःकार्य मेवसर्वत्रवाक्यार्थः । कार्यत्वंचकृतिसाध्यत्वेसतिकृत्युद्देश्यत्वं । तत्रलिङ्लोट्तव्यप्रत्ययःसाक्षात्कार्याभिधायी । पदांतराणितु तत्प्रतीतयेतदन्वितस्वार्थाभिधायीनितत्पराण्येव । नचानेजदेकमित्यादौतद्बोधकंलिंगादिश्रूयते । ततःकेवलसिद्धस्वरूपब्रह्मप्र तिपादकस्यास्यापर्यवसितत्वेनाप्रामाण्यप्रसंगः । नचविष्णुरुपांशुयष्टव्यइत्यादिकर्मविधिशेषत्वेनवा आत्माद्रष्टव्यःश्रोतव्यइत्या दिज्ञानविधिशेषत्वेनवाऽत्रब्रह्मप्रतिपादनेनकार्यपरत्वान्नापर्यवसितत्वमितिवाच्यं । तथात्वेब्रह्मणःकार्यशेषत्वापत्त्या स्वप्रधाने ब्रह्मणिवेदांतानांमहातात्पर्यमितिसिद्धान्तव्याकोपप्रसंगादित्यतआह ॥ स्वप्रधानइति ॥ कार्यानन्वितइत्यर्थः । सत्यंपर्यवसि

स्वप्रधानेब्रह्मणिवेदांतानांतात्पर्यादत्रस्वरूपकथनमात्रेणवाक्यपरिसमाप्तिः ॥ ४ ॥

तमेववाक्यंप्रमाणं कार्यपरमेवचपर्यवसितमिति । तथापि कृतिसाध्यत्वेसतिकृत्युद्देश्यत्वंनकार्यत्वं । तथासतिमात्रादीन्जिज्ञा समानंप्रति इयंतेमाता अयंतवपितेत्यादिसिद्धबोधकवाक्यस्याप्रामाण्यप्रसंगात् । किंत्विष्टेष्टसाधनतान्यतररूपमेव । तच्चक्व चित्सिद्धं क्वचित्कृतिसाध्यमित्यन्यदेतत् । तदिहापिब्रह्मणउत्तमानामिष्टत्वान्मध्यमादीनामिष्टसाधनत्वात्तद्बोधकवाक्यस्ययु क्तापरिसमाप्तिरितिभावः ॥ ४ ॥ ननुतदेजतीत्याद्युत्तरभाष्यंव्यर्थं । नचश्रौतपदानुवादेनव्याख्यानार्थमितिवाच्यं । अप्रतीत्य

ईशा० ८० न्यथाप्रतीतिरूपव्याख्यानबीजाभावेनतदयोगात् । नचतद्ब्रह्मबिभेतीत्यन्यथाप्रतीतिरेवबीजमितिवाच्यं । तच्चेष्टतइतियथाप्र

तीतेरपिसंभवेना न्यथाप्रतीत्यैवभाव्यमितिनिर्बंधेकारणाभावादित्यतःपरिशेषएवतत्कारणमित्याशयेनाह ॥ उत्तरमंत्रइति ॥
प्रायपाठविरुद्धमिति ॥ अनेजदित्यत्रएजतेर्भयार्थत्वेनव्याख्यातत्वात्तत्प्रायपठितत्वविरुद्धमित्यर्थः ॥ अतइति ॥ अर्थांत
रप्रतीत्यसंभवादित्यर्थः । ननुतदित्यस्यततइतिव्याख्यानमलाक्षणिकत्वादयुक्तमित्यतस्तद्घटयन्नुत्तरभाष्यमवतारयति ॥ तदि
त्यव्ययंपंचम्यर्थेचेदमंगीक्रियतइति ॥ ननुतच्छब्दरूपस्यतदित्यस्यप्रथमात्वेपिसप्तसुप्रथमेतिमहाव्याकरणसूत्रात् सुपांसु
उत्तरमंत्रेतदेजतीत्यस्य तद्ब्रह्मचेष्टतइतितुव्याख्यानं प्रायपाठविरुद्धं । अतःत
द्बिभेतीत्यन्यथाप्रतीतिःस्यात्तन्निरासायाह ॥ तदिति ॥ तदित्यव्ययंपंचम्यर्थेचे
दमंगीक्रियते । तर्ह्येजनस्यकिंकर्तृ तत्राह ॥ अन्यदिति ॥ ननुकिमध्याहारेण
लुक्इतिप्रसिद्धव्याकरणसूत्राद्वापंचम्यर्थत्वसंभवेअव्ययत्वांगीकारोऽयुक्तः । नामब्रह्मेत्यादौप्रथमादेःसप्तम्याद्यर्थत्वस्योदाहृत
व्याकरणद्वयानुसारेणभाष्यटीकाकृद्भ्यांबहुशोंगीकृतत्वाच्चेतिचेन्मैवं । महाव्याकरणसूत्रेणप्रथमायाःपंचम्यर्थत्वेपि प्रसिद्धव्या
करणसूत्रेणचप्रथमायाःपंचम्यादेशत्वेनपंचम्यर्थत्वेपि नसाक्षात्पंचम्याएवपंचम्यर्थत्वं । अव्ययत्वांगीकारेतु । सर्वासुचविभ
क्तिषु ॥ वचनेषुचसर्वेषुयन्नव्येतितदव्ययमित्युक्तन्यायेन तदित्यस्यैवपंचमीत्वेनतदर्थत्वोपपत्तेःप्रतिपत्तिलाघवादव्ययत्वांगी

उप० । तदेजतितन्नेजतितद्दूरेतद्वंतिके । तदंतरस्यसर्वस्यतदुसर्वस्यबाह्यतः ॥ ५ ॥

भा० । तदेजतिततएवएजत्यन्यत् ।



कारोयुक्तः । यद्वा एतद्ग्रंथस्योपायांतरत्वान्नकश्चिद्दोषः । तदित्यस्याव्ययत्वंतुस्वरादित्वेनेतिमंतव्यं । नन्वध्याहाराभावेकथंक
र्त्राकांक्षाशांतिरित्यतउक्तं ॥ तद्ब्रह्मेति ॥ ननुततएजतिबिभेतीतिव्याख्यानेकर्तृवाचकशब्दाभावोदोषः । तद्बिभेतीतिव्या
ख्याने उत्तरवाक्यविरोधोदोषइतिपक्षद्वयस्यापिदुष्टत्वसाम्यात्कथंनिर्णयइत्यतआह ॥ शाब्द्याह्यनुपपत्तेरिति ॥ आर्थानु
पपत्तेरन्यतरवाक्याप्रामाण्यहेतुत्वेनबलवत्त्वं । शाब्दानुपपत्तेस्त्वध्याहारेणपरिहार्यत्वान्नतद्धेतुत्वमितिततोदुर्बलत्वमितिभावः ।
ननूपपत्तिसिद्धेर्थेप्रमाणांतरानपेक्षणादुत्तरंभाष्यमनर्थकमित्यतउपपत्तेःसावकाशत्वशंकापूर्वकंभाष्यमवतारयति ॥ तन्नेजती
तद्ब्रह्मबिभेतीत्येवार्थःकिंनस्यादित्यतस्तन्नेजतीत्युत्तरवाक्यविरोधात् । शाब्द्याह्यनुपपत्तेरार्थीबलव
तीतिभावेनतद्व्याख्याति ॥ तत्स्वयमिति ॥ तन्नेजतीत्येतन्निष्क्रियत्वार्थमपिव्याख्यातुंशक्यमित्यतो
त्येतन्निष्क्रियत्वार्थमपीति ॥ तथाचोत्तरवाक्यस्याविरोधकत्वात्तदेजतीत्यस्यतद्ब्रह्मबिभेतीत्येवार्थोयुक्तः । अध्याहाराभावा
दितिभावः । नचतन्नेजतीत्यस्यनिष्क्रियत्वार्थत्वेमनसोजवीयइत्यनेनविरोधःशंक्यः । निर्भयत्वार्थत्वेपिअनेजदित्यनेनपौनरु
क्त्यदोषसाम्यात् । यदिचतात्पर्यज्ञापकत्वेनपौनरुक्त्यंपरिह्रियते तदासोपाधिकनिरुपाधिकविषयत्वेनविरोधोपिपरिह्रियतां ।
नचैवंपक्षद्वयेपिसाम्यादेवमेवव्याख्यानेकिंबीजमितिवाच्यं । तदेजतीत्यस्यततएजत्यन्यदितिव्याख्यानस्यातिक्लिष्टत्वेनसाम्या
भावात् । साम्येप्यर्थानिर्णयेनसिद्धांतिनएवानिष्टत्वात् । अतएवनिष्क्रियत्वार्थमपीत्युक्तमितिशंकितुरभिप्रायः । यद्यपि मु

भा० । तत्स्वयंनैजति ।

ख्यार्थसंभवे अमुख्यार्थायोगादित्युक्तरीत्या सोपाधिकनिरुपाधिकविषयत्वेन विरोधस्य परिहर्तुमशक्यत्वेन मनसोजवीयइत्येतद्वि रोधस्यापरिहार्यत्वान्नैतच्चोद्यावकाशः । तथापि तदाच्छादनेनैवैतच्चोद्यमितिमंतव्यं ॥ मंत्रार्थइति ॥ अतोनोत्तरार्धस्यवैयर्थ्य मितिभावः । ननुसर्वगतत्वस्यदूरइत्यादावेकैकत्रतावन्नहेतुत्वं । असर्वगतानामपिघटादीनांदूरादिस्थत्वात् । नापिद्वयोर्द्वयोः । सर्वगतत्वाद्दूरेबाह्येच । सर्वगतत्वादंतःसमीपगश्चेत्यत्रापिपूर्वदोषानुवृत्तेरित्यतो द्वितीयंपक्षमंगीकृत्यतत्रोक्तदोषपरिहारायश्रुत्य नुसारेण प्रतियोग्यनुयोगिक्रमानुसारेणच पदानियोजयति॥दूरइति ॥ भा० ॥५॥ ततश्चानेजदेकमित्यादिमंत्रद्वयस्यायमर्थः।

मंत्रार्थेसमाख्यामाह ॥ ततइति ॥ दूरेसमीपतश्चबाह्येंतश्चेतियोज्यं ॥ ५ ॥

तद्धावतइत्यत्रश्रूयमाणंतदित्येतत्सर्वत्रान्वेति । तद्ब्रह्म निर्भयत्वादेवानेजदित्युच्यते । नतुनिष्क्रियत्वात् । प्रधानत्वादेवैक मित्युच्यते । नतुद्वितीयशून्यत्वात्। मनसोजवीयः । मनोहिवेगवत्त्वेनप्रसिद्धं । ततोप्यतिशयेनवेगवत्। एनत् एतद्ब्रह्म देवाः ब्रह्माद्याः। नाप्नुवन्सस्यक्नज्ञातवन्तः। स्वयंतुपूर्वं पूर्वमेवानादितएवसर्वान्अर्षत्व्यजानात्। ऋषज्ञाने तद्ब्रह्म स्वयमेकत्रतिष्ठदेव धावतोद्रवतोऽन्यानत्येतिअतिक्रम्यवर्तते । एवंमाहात्म्योपेतेतस्मिन्ब्रह्मणि मातरिश्वामुख्यवायु रपःसर्वैःक्रियमाणानिकर्माणि दधातितत्पूजात्वेनसमर्पितवान् ॥ खं० ४ ॥ वायोःसर्वप्रेरकत्वेन सर्वकृतकर्मणांमुख्यतोवायुकर्तृकत्वेन युक्तंवायोःसर्वकर्मस ॥ ३० ॥

भा० । ततोबिभेतिसर्वोपिनबिभेतिहरिःस्वयं । सर्वगत्वात्सदूरेचबाह्येंतश्चसमीपगइतितत्वसंहितायाम् ॥ ५ ॥

मर्पणं । ब्रह्मणोऽन्यस्माद्भयाभाववदन्यस्यापिब्रह्मणःसकाशाद्भयाभावेसाम्यंस्यादित्यतआह ॥तदेजतीति॥ तदित्यव्ययंपंचम्य र्थे।अन्यदितिकर्त्रध्याहारः। तत्ततोब्रह्मणः सकाशा दन्यत्ब्रह्मादिजग देजतिबिभेति। भीषास्माद्वातःपवतइत्यादेः।तत्ब्रह्मस्वयं नैजतिनबिभेति । तद्दूरेतदुतदेवांतिकेसमीपेचवर्तते । सर्वगतमितियावत् । नचानेजदित्यनेननिर्भयत्वस्य तद्धावतइत्यादिना सर्वगतत्वस्यचोक्तत्वात्पुनरुक्तिरितिवाच्यं श्रुतिःस्वस्यपरमात्मनिर्भयत्वसर्वगतत्वप्रतिपादनेतात्पर्यमस्तीतिज्ञापनाय तदभ्यस्य तीत्यंगीकारेदोषाभावात् । तद्ब्रह्मास्यसर्वस्यांतर्नियामकत्वेनवर्तते । तदु तदेवास्यसर्वस्यबाह्यतोबहिराश्रयत्वेनवर्ततइति । खं० ॥ ५ ॥ प्रकरणवशादुत्तरमंत्रस्यापिभगवन्माहात्म्यप्रतिपादकत्वमितिभ्रमनिरासायप्रतिपाद्यंकथयन्भाष्यंसंगमयति ॥

तद्दूरेतद्वंतिकइत्यादौपरमेश्वरस्यसर्वभूताश्रयतयासर्वभूतगतत्वमुक्तं ।

तद्दूरइत्यादि ॥ यद्यप्यत्रसर्वभूताश्रयत्वंसर्वभूतगतत्वंचोक्तमित्येववक्तव्यं । तदुसर्वस्यबाह्यतइत्यनेनसर्वभूताश्रयत्वस्य तदं तरस्येत्यनेनसर्वभूतगतत्वस्यचपृथगुक्तत्वात् । अतएव इत्यादावित्युक्तं । यस्त्वित्युत्तरमंत्रेतद्व्याख्यानश्रुतौचोभयोःसमकक्ष्यत योक्तत्वाच्च । तथापि श्रुत्युक्तंसर्वभूताश्रयत्वंसर्वभूतगतत्वेप्रकारसमर्पकमेव । नतुस्वातंत्र्येणज्ञेयमितिज्ञापनायतथोक्तिसंभवा त् । पृथगुभयोर्ज्ञेयत्वसंभवेकिंप्रकारसमर्पकताज्ञापनेनेतिचे न्नैवंशंक्यं । सर्वभूतगतत्वस्यगगनादिसाधारणस्य स्वावस्थानाय सर्वभूतोपजीवनरूपस्यवा भगवन्माहात्म्यरूपत्वाभावेनमुमुक्षुज्ञेयत्वासंभवादितिशंकावकाशात् । सर्वभूतगतत्वोक्तौतुनैतच्चो द्यावकाशः । भगवतःसर्वभूतगतत्वंसर्वभूतस्थितिहेतुव्यापारप्रेरकत्वेन । एतदेवसर्वभूताश्रयतयासर्वभूतगतत्वंनाम । नचै

तद्वगगनादिसाधारणं नवास्वावस्थानायसर्वभूतोपजीवनं । येनोक्तदोषःस्यात् । सर्वाधारतयासर्वभूतेषुपरमात्मानंविजानतः
पूर्वमंत्रोक्तस्यसर्वाधारतयासर्वभूतगतत्वस्यात्रानुवादः । प्राक्सर्वाधारत्वेनसर्वगतत्वदर्शनफलमुक्तमित्याद्युत्तरटीकाग्रंथादप्य
यमेवार्थष्टीकाकृदभिप्रेतोज्ञायते । अन्यथाटीकायांक्वचिदपिसर्वभूताश्रयत्वस्यसर्वभूतगतत्वसमकक्ष्यतयोक्तिप्रसंगेननियमेनप्र
कारतयोक्तिर्नस्यात् । उक्तंचप्रमेयदीपिकायां । नहिसर्वभूतप्रेरकत्वेनसर्वभूतगतत्वंगगनादिसाधारणं । येनमुमुक्षूपास्यत्वाभाव
इति । उक्तंचतत्वप्रकाशिकायां । नसर्वभूतेषुस्थितिमात्रंसर्वभूतांतर्यामीचेति ॥ तज्ज्ञानफलमिति ॥ अत्रज्ञानसामान्यग्रह
णेन यस्त्वितिमंत्रे सर्वगमितिभाष्योदाहृतश्रुतौच दृशेर्ज्ञानसामान्यार्थत्वं । पश्यार्थैश्चानालोचनइत्यादौदृशेर्ज्ञानमात्रार्थताया

तज्ज्ञानफलं यस्तुसर्वाणीतिमंत्रेणोच्यते ।

दृष्टत्वादित्युक्तंभवति । कुतोविशेषशब्दस्यसामान्यपरत्वमितिचेत् । यस्त्वितिमंत्रस्य यस्मिन्नितिमंत्रस्यच पौनरुक्त्यमाशंक्या
द्यस्यज्ञानसामान्यवाचकत्वं द्वितीयस्यविशेषज्ञानपरत्वंचाश्रित्य विजानतश्चात्रोच्यतइत्युत्तरभाष्येणपरिहारादिदंज्ञायते । ए
तच्चतद्वाक्यव्याख्यानटीकायांस्पष्टं । प्राप्ताधिकारस्यपरमेश्वरतत्वबुभुत्सावतःपरमात्मतत्वोपदेशःक्रियते । अनेजदित्यादि
नेत्यादिपूर्वटीकापर्यालोचनयाचास्यज्ञानसामान्यपरत्वंविज्ञायते । नचयस्त्वितिमंत्रस्यज्ञानसामान्यपरत्वेतत्साक्षात्कारोमोक्षसा ॥ ३१ ॥
धनमित्यतीतग्रंथेनोक्तमित्यग्रिमटीकाविरोधइतिवाच्यं । अत्रोक्तपरोक्षज्ञानस्यापरोक्षज्ञानद्वारामोक्षसाधनत्वेनसाक्षात्कारस्यापि

उप० । यस्तुसर्वाणिभूतान्यात्मन्येवानुपश्यति । सर्वभूतेषुचात्मानंततोनविजुगुप्सते ॥ ६ ॥

मोक्षसाधनत्वमुक्तप्रायमित्यभिप्रायेणवा यस्मिन्नितिमंत्रेविजानतइत्यनेनसाक्षात्कारस्योक्तत्वाभिप्रायेणवा अग्रिमग्रंथप्रवृत्त्युप
पत्तेरिति ॥ सर्वभूतात्मकत्वमुच्यतइति ॥ ७ ॥ इयमत्रापव्याख्या ॥ यस्तुपरिव्राट्मुमुक्षुःसर्वाणिभूतान्यव्यक्तादीनि
स्थावरांतानि आत्मन्येवानुपश्यति । आत्मव्यतिरिक्तानिनपश्यतीत्यर्थः । सर्वभूतेषुचात्मानं तेषामपिभूतानामहमेवात्मेति ।
सर्वभूतेषुचात्मानंयस्तुपश्यतिसः ततःतस्मादेवदर्शनात् । नविजुगुप्सतेविजुगुप्सांघृणांनकरोति । सर्वाहिघृणा
आत्मनोन्यंनिकृष्टंपश्यतोभवति आत्मानमेवात्यंतविशुद्धंनिरंतरंपश्यतोनघृणानिमित्तमस्तीति ॥ ७ ॥ मंत्रसमाख्याश्रुत्योः

तत्रजीवस्यसर्वभूतात्मकत्वमुच्यतइत्यपव्याख्याननिरासाय मंत्रंश्रुत्याव्याचष्टे ॥
सर्वगमिति ॥ सर्वगंपरमात्मानमिति सर्वभूतेषुचात्मानमित्यस्यार्थः । सर्वं
चपरमात्मनीतिपूर्वार्धस्य । भयाभावादिति ततोनविजुगुप्सतइत्येतद्व्याख्यानस्य

क्रमेणव्याख्यानव्याख्येयभावभ्रमंनिवारयति ॥ सर्वगमिति ॥ पूर्वार्धस्यार्थइतिसंबंधः । ननुव्याख्यानश्रुतौभयाभावादि
तिव्यर्थं । व्याख्येयमंत्रे तद्व्याख्येयपदाभावादित्यतआह ॥ भयाभावादितीति ॥ भयाभावादित्येतन्नात्मानंगोप्तुमिच्छती
त्यस्योपपादनमित्यन्वयः । ततश्चभयाभावादित्येतदुपपत्तिसमर्पकतयामंत्रेअध्याहाररूपमेव नव्याख्यानरूपमित्युक्तंभवति ।
ननुमंत्रेनात्मानंगोप्तुमिच्छतीतिसाध्यमेवनश्रूयते । कस्योपपादनायाध्याहारइत्यतउक्तं ॥ ततोनविजुगुप्सतइत्येतद्व्याख्या

भा० । सर्वगंपरमात्मानंसर्वंचपरमात्मनि । यःपश्येत्सभयाभावान्नात्मानंगोप्तुमिच्छतीतिसौकरायणश्रुतिः ॥ ६ ॥

नस्येति ॥ यद्यप्यत्रनविजुगुप्सतइत्येतद्व्याख्यानस्येत्येववक्तव्यं नतुततइति । तद्व्याख्यानाभावात् । तथापिभयाभावादित्य ध्याहारेनिमित्तसूचनाययथाश्रुतानुवादःकृतः । ततोनविजुगुप्सतइतिविशिष्टानुवादेहि ततःपरमेश्वरस्यसर्वभूताश्रयत्वादिज्ञा नान्नात्मानंगोप्तुमिच्छतीत्यर्थप्रतीत्याअप्रयोजकत्वशंकायांतन्निरसनोचितस्यभयाभावादित्यस्याध्याहारोविज्ञायेत । ततश्चपर मेश्वरस्यसर्वभूताश्रयत्वादिज्ञानाद्भयाभावः । भयाभावान्नात्मगोपनेच्छेतिसुगमःसाध्यसाधनभावः । नचततइत्यस्यव्याख्यानं भयाभावादितीत्येवकिंनोक्तमितिवाच्यं । ज्ञानस्येवभयाभावस्याप्रकृतत्वेनपरामर्शानुपपत्तेरित्याशयात् । यद्वाटीकायांततइत्य तःपर मित्यस्यार्थइत्यनुवर्तते । ततइत्यस्यार्थोभयाभावादितीतियोजना । बुद्ध्याप्रकृतत्वात्परामर्शोपपत्तिरितिभावः । ननुकिं

नात्मानंगोप्तुमिच्छतीत्यस्योपपादनं । अभेदार्थतायांसप्तम्यनुपपत्तिश्च ॥ ६ ॥

बुद्ध्याप्रकृतत्वमंगीकृत्यभयाभावपरामर्शेनेत्यतआह ॥ नात्मानंगोप्तुमिच्छतीत्यस्योपपादनमिति ॥ भयाभावादितीत्यनु वर्तते । भयाभावादित्येतन्नात्मानंगोप्तुमिच्छतीत्यस्योपपादनमुपपादकं । नतुसर्वभूताश्रयत्वेनसर्वभूतगतत्वज्ञानंसाक्षात्तदुपपा दकं । अप्रयोजकत्वात् । अतोबौद्धपरामर्शोयुक्तइतिभावइतिव्याख्येयं । अथवा ततइत्येतत्भयाभावादितीत्यतःपूर्वसंबध्य ते । तथाचततइत्यनूद्यभयाभावादितिव्याख्याय नविजुगुप्सतइत्यादिनातस्योपयोगःकथितोभवतीतिव्याख्येयं । भाष्यमुप लक्षणमित्याशयेनांतरंगानुपपत्तिमप्याह ॥ अभेदार्थतायामिति ॥ यस्त्वितिमंत्रस्यजीवस्यसर्वभूताभेदार्थतायामात्मनीति सर्वभूतेष्वितिचसप्तम्यनुपपत्तिः । तयाआधाराधेयभावप्रतीत्याभूतलघटयोरिवभेदस्यैवप्रतीतेरित्यर्थः । चशब्देनसमाख्याश्रु

तिविरोधंसमुच्चिनोति ॥ भा० ॥ ६ ॥ ततश्चायंमंत्रार्थः ॥ यस्त्वधिकारी सर्वाणिभूतानिचेतनाचेतनात्मकान्यात्मन्येवआत्माधारतयैवानुपश्यतिजानाति सर्वभूतेषुचात्मानं नियामकत्वेनानुपश्यति सःआत्मानंनविजुगुप्सतेगोप्तुंनेच्छति । कुतः । ततःसर्वाश्रयतयासर्वभूतगतत्वज्ञानात् । तथाज्ञानेपिकुतोनगोपनेच्छेत्यतोपिततइत्युक्तं । भयाभावादित्यर्थः । भयकारणेषुसत्ताप्रदत्वेनपरमेश्वरंजानतस्तेषामकिंचित्करत्वेनज्ञानावश्यंभावाद्भयाभावः । ततश्चनात्मनोगोपनेच्छेति ॥ खं० ॥ ६ ॥ एतन्मंत्रार्थेति ॥ अतोनमंत्रप्रतिपाद्यंपृथग्वक्तव्यं । नापिपुनरुक्तिरितिभावः ॥ वक्ष्यतीति ॥ पूर्वोक्तानुवादेनेत्यादिनेतिशेषः ॥

**एतन्मंत्रार्थविवरणार्थोयस्मिन्सर्वाणीत्ययंमंत्रइतिवक्ष्यति । तत्र यस्मिन्नात्मनिजीवेसर्वभूतानिसआत्मैवयस्यविजानतःतानिसंवृत्तइत्याद्यन्यथाप्रतीतिनिरासाय मंत्रंव्याख्याति ॥**

तत्रेति ॥ उत्तरमंत्रइत्यर्थः । एतस्यान्यथाप्रतीतिनिरासायेत्यनेनान्वयः । यस्मिन्काले यथोक्तआत्मनिवा तान्येवसर्वाणिभूतानि परमार्थदर्शनादात्मैवाभूदात्मैवसंवृत्तः । परमार्थवस्तुविजानतः । तत्रतस्मिन्काले तत्रात्मनिवा कोमोहःकःशोकःशोकश्चमोहश्चकामबीजमजानतोभवति । नत्वात्मैकत्वंशुद्धंगगनोपमंपश्यतइत्यपव्याख्यांकिंचिद्विवरणपूर्वकंसंग्रहेणानुवदति ॥ यस्मिन्नित्यादिना ॥ विजानतस्तानिसंवृत्तइति ॥ परमार्थवस्तुविजानत स्तानिभूतानिसंवृत्तो भूतानिजातःभूताभिन्नइतियावत् । परेणात्मैवाभूदात्मैवसंवृत्तइत्यत्राभूदित्येतत्प्रतिपदत्वेनसंवृत्तइतिप्रयोगात्संग्रहानुवादेऽत्रसंवृत्तइत्येवानूदितं । तस्य

---

उप० । यस्मिन्सर्वाणिभूतान्यात्मैवाभूद्विजानतः । तत्रकोमोहःकःशोकएकत्वमनुपश्यतः ॥ ७ ॥

चायमेवार्थइतिज्ञातव्यं । तानिसंवृत्तइतिक्वचित्पाठः । सतुस्वपरमूलकोशादर्शनात्कल्पितोज्ञातव्यः । इत्याद्यन्यथाप्रतीतीत्यत्रादिशब्देन तत्रकोमोहइत्याद्यन्यथाप्रतीतिसंग्रहः । सर्वभूतानीत्यस्याभूदित्यनेनान्वयासंभवात्तदनुवदन्नपेक्षितंपूरयति ॥ सर्वभूतानीति ॥ तत्रेत्यनुवादेनेति ॥ तत्रकोमोहइत्यत्रविद्यमानस्यतत्रेत्यस्यानुवादेनेत्यर्थः । ननुइदानीमपिपरमेश्वरस्य सर्वभूतगतत्वादभूदित्यतीतत्वोक्तिरयुक्तेत्यतो नातीतत्वाभिप्रायेणाभूदित्युक्तं । किंत्वागंतुकत्वशंकानिरासायानादितोवर्तमानत्वाभिप्रायेणेत्याशयेन प्रयोगएककालीनःसर्वकालेनुषज्जते ॥ ददर्शविष्णुरित्यादौनित्यचिद्रूपतोहरेरितिप्रमाणंमनसिनिधायानू

**यस्मिन्निति ॥ सर्वभूतानि तिष्ठंतीतिशेषः । तत्रेत्यनुवादेनसर्वभूतेष्वितिव्याख्यानं । अभूत् अनादितोवर्तते । विजानतइत्यस्यान्वयसिद्ध्यर्थमेवमित्यध्याहारःकृतः ।**

द्यव्याचष्टे ॥ अभूत्अनादितोवर्ततइति ॥ ननुभाष्येएवमितिनतावच्छ्रौतपदानुवादः श्रुतौतदभावात् । नाप्यध्याहारः तस्यव्यर्थत्वादित्यतो द्वितीयंपक्षमंगीकृत्याध्याहारस्यप्रयोजनमाह ॥ विजानतइत्यस्यान्वयसिद्ध्यर्थमिति ॥ अभूदित्यंतेनपूर्वेणान्वयसिद्ध्यर्थमित्यर्थः । एवंविजानतइत्युक्तेहिपूर्वोक्तस्यज्ञानेप्रकारत्वप्रतीत्याविजानतइत्यस्यपूर्वेणान्वयोघटते । विजानतइत्येवोक्तौयेनकेनापिप्रकारेणेतिप्रतीत्यानपूर्वोक्तेनान्वयसिद्धिः । अतएवोदाहरिष्यमाणसमाख्याश्रुतौ एवंसर्वत्रयोविष्णुंपश्येदित्युक्तमितिभावः । ननुमंत्रे परमात्मनःसर्वभूतगतत्वेनज्ञानं तेष्वेकत्वेनज्ञानंचपृथगेवानूद्यफलमुक्तं । तत्रविजानतइति एकत्व 

भा० । यस्मिन्परमात्मनिसर्वभूतानि सपरमात्मैवतत्रसर्वभूतेष्वभूत् । एवंसर्वभूतेष्वेकत्वेनपरमात्मानंविजानतःकोमोहः ।

मनुपश्यतइतिचपृथक्श्रवणात् । भाष्येतु सर्वभूतेष्वेकत्वेनपरमात्मानंविजानतइत्युभयविषयकैकज्ञानानुवादेनफलमुक्तमतोमंत्रभाष्ययोर्विरोधइत्यतोमंत्रानुसारेणभिन्नवाक्यतयाभाष्यंयोजयति ॥ एवंसर्वाधारतयेति ॥ सर्वभूतेषुपरमात्मानमितिसंबंधप्रदर्शनं । तंचेतिशेषकथनमितिज्ञातव्यं । यद्यप्यत्रटीकायांसर्वाधारतयासर्वभूतेष्वित्यादिकमेववक्तव्यं । नत्वेवमिति तस्ययोजनानुपयोगात् तथापि सर्वभूतेष्वित्यादिभाष्यमध्याहृतैवंशब्दव्याख्यानरूपमितिज्ञापनायतदुक्त्युपपत्तेः । नचैवमपिटीकायां सर्वाधारतयेत्यधिकं भाष्येतदभावादनावश्यकत्वाच्चेतिवाच्यं । मंत्रे यस्मिन्सर्वाणिभूतानीत्युक्तंसर्वभूताश्रयत्वंसर्वभूतगतत्वेप्रकारप्रदर्शकतयोपयुज्यते । नतुसर्वभूतगतत्वादिकमिवपृथक्ज्ञातव्यतया । तथात्वेतद्वत्पृथग्विजानतइतिवक्तव्यत्वापा

**एवंसर्वाधारतयासर्वभूतेषुपरमात्मानं**

तात् । सर्वभूतगतत्वेप्रकारप्रदर्शनंत्वावश्यकमितिप्रागुपपादितमेव । भाष्येतदनुक्तिरपिस्वातंत्र्येणाज्ञेयत्वसूचनायेत्येतावतोर्थस्यज्ञापनायसर्वाधारतयेत्युक्तेरावश्यकत्वात् । यद्वा भाष्येएवमित्यस्यवैयर्थ्यशंकायां यस्मिन्सर्वाणिभूतानीत्युक्तसर्वाधारत्वस्यप्रकारतयाऽनुवादार्थत्वान्नतदितिभावेनैवमित्यनूद्यसर्वाधारतयेतिव्याख्यातं । अस्मिन्पक्षेभाष्ये सर्वभूतगतत्वमिवसर्वभूताधारत्वस्यापिवक्तव्यत्वात्न्यूनतेतिशंकानिरस्ताभवति । एवंशब्देनोक्तिस्तुप्रकारत्वज्ञापनायेतिबोध्यं । ननुतंचैकत्वेनविजानतइतियोज्यमित्युक्तमयुक्तं । मंत्रानुसारेणतंचैकत्वेनानुपश्यतइतिवक्तव्यत्वात् । नचयथाभाष्यमुक्तत्वान्नदोषः । तथासतिभाष्यस्यमंत्रविरोधप्रसंगः । मंत्रेविजानतइत्यस्योभयत्रसंबंधाभिप्रायेणभाष्यप्रवृत्त्यंगीकारेमंत्रेऽनुपश्यतइत्यस्यवैयर्थ्यप्रसंगइत्यतआ

ह ॥ विजानतइति ॥ अत्रयद्यपिविजानतइत्येतन्नविजानतइत्यस्यव्याख्यानं । यथाश्रुतानुवादत्वेनाधिकोक्त्यभावात् । नाप्यनुपश्यतइत्यस्य उभयोःसमानार्थत्वेनविशेषाभावात् । तथापिविजानतइत्यनुवादेनकोमोहइतिसंबंधस्यप्रदर्शितत्वात्तद्व्याख्यानत्वोक्तिर्घटते । नह्यर्थकथनमेवव्याख्यानं । अनुपश्यतइत्यस्यतुनपूर्वमंत्रइवात्रदृशेर्ज्ञानसामान्यार्थत्वं । किंतुसाक्षात्कारार्थमितिज्ञापनायविजानतइतिव्याख्यानंकृतं । विशेषतोजानतःअपरोक्षज्ञानिनइति ॥ ततश्चेत्थंमंत्रयोजना ॥ यस्मिन्परमा

विजानतः तंचैकत्वेनविजानतइतियोज्यं । विजानतोनुपश्यतइतिद्वयोर
पिव्याख्यानंविजानतइति । अर्थांतरेसंभवतिकुतोयंमंत्रार्थइत्यतःश्रुत्यं
तरेणव्याख्यानादितिभावेनाह ॥ यस्मिन्निति ॥ विजानतःएकत्वंचेतिशेषः ।

त्मनिसर्वाणिभूतानितिष्ठंति । सपरमात्मैव तत्र तेषुभूतेष्वभूत् । सर्वभूताधारतयासर्वभूतेष्वनादितोवर्तते । इत्येवंपरमात्मानं विजानतःविशेषतोऽपरोक्षतोजानतः तथासर्वेषुभूतेषुस्थितस्यपरमात्मनःएकत्वंअधिष्ठानभेदप्रयुक्तभेदाभावं ततश्चानुग्राह्यानुग्राहकभावाभावंचानुपश्यतः आपरोक्ष्येणजानतः कोमोहःनकोपि । तदभावेचकःशोकःनकोपीति । एकत्वमनुपश्यतइतिमंत्रानुसारेणापेक्षितंपूरयति ॥ एकत्वेनेति ॥ एकत्वंचेतिशेषइत्यपिपाठः । अध्याहृतस्यान्वयप्रदर्शनायविजानतइत्यनुवादइति ॥ ३४ ॥

भा० । यस्मिन्सर्वाणिभूतानिसआत्मासर्वभूतगः । एवंसर्वत्रयोविष्णुंपश्येत्तस्यविजानतः । कोमोहःकोथवाशोकः

ज्ञेयं । विमतःशोकाद्यभाववान् परमेश्वरज्ञानित्वादितिमंत्राभिप्रेतानुमानेऽप्रयोजकत्वमाशंकते ॥ ननुपरमेश्वरज्ञानेपीति ॥ परमेश्वरज्ञानेनतत्प्राप्तिमनुमाय तयाशोकाद्यभावसाधनान्नदोषइत्याशयेनव्याचष्टे ॥ यतइति ॥ सइत्यस्यव्याख्यानं ज्ञानीति ॥ सुप्तौविष्णुप्राप्तावप्यात्यंतिकशोकाद्यभावाभावाद्व्यभिचारनिरासायश्रुत्युक्तस्यपरीत्यस्यव्याख्यानं सम्यगिति ॥ गमेर्ज्ञानार्थत्वभ्रमनिरासायप्राप्नोतीत्युक्तं । अनियमःसर्वेषामविरोधादित्युक्तन्यायेनज्ञानिनोविष्णुप्राप्तिनियमान्नासिद्धिराशंकनीये

ननुपरमेश्वरज्ञानेपिकुतःशोकाद्यभावइत्यतआह ॥ सविष्णुमिति ॥ यतोज्ञानीविष्णुंपर्यगात् सम्यक्प्राप्नोत्येव । अतःशोकाद्यभावःतस्ययुक्तइत्यर्थः । अनेनसपर्यगादित्युत्तरमंत्रार्थतात्पर्यमप्युक्तंभवति । एकत्वमित्यस्यपौनरुक्त्यंचान्यथा । अनुवादस्यवैयर्थ्यात् ।

त्याशयेनावधारणप्रयोगइतिज्ञातव्यं ॥ अनेनेति ॥ विष्णुप्राप्तेर्हेतुत्वकथनेनेत्यर्थः ॥ तात्पर्यमिति ॥ ज्ञानिनःशोकाद्यभावे युक्तिकथनेतात्पर्यमित्यर्थः । अन्यथोत्तरार्धस्यपूर्वमंत्रेणसंगत्यभावप्रसंगइतिभावः । नकेवलंशोकाद्यभावेहेतुरुक्तोभवति किंतु तात्पर्यमपीत्यपिशब्दः । भाष्यमुपलक्षणमित्याशयेनापव्याख्यानेआंतरानुपपत्तिमप्याह ॥ एकत्वमिति ॥पौनरुक्त्यमिति॥ सर्वाणिभूतान्यात्मैवेतिविजानतइत्यनेनैक्यज्ञानस्योक्तत्वात्पौनरुक्त्यमित्यर्थः । अन्यथा परोक्तव्याख्याने ॥ वैयर्थ्यादिति ॥ अ



भा०' । सविष्णुंपर्यगाद्यतइतिपिप्पलादशाखायां ।

धिकविधाननिषेधयोरन्यतरस्याभावादितिभावः॥एवमिति॥भाष्यकारोक्तरीत्येत्यर्थः। अपिशब्देनव्याख्यानद्वयस्यापिसमबाध
कत्वाद्भाष्यकृदुक्तमेवयुक्तमितिनिर्णयोनोपपद्यतइतिसूचयति। ननुभाष्येसाध्यानुक्तेर्न्यूनता नपुनरुक्तिरितितदध्याहारेप्यनन्व
यप्रसंगः। तदर्थमतइत्यध्याहारेपिसमग्रस्यपुनरुक्त्यभावहेतुत्व मुतपूर्वोक्तानुवादेनेत्येतावन्मात्रस्य नोभावपि। पूर्वोक्तानुवादेन
नपुनरुक्तिरित्येतावतैवसमंजसत्वेनशोकमोहेत्यादेर्व्यर्थत्वादित्यतः आकांक्षाक्रमेणभाष्यंयोजयति ॥ पूर्वमंत्रोक्तस्येति ॥ पू

नन्वेवंमंत्रव्याख्यानेपिपुनरुक्तिःस्यात्। यस्तुसर्वाणिभूतान्यात्मन्येवेत्यस्य यस्मिन्सर्वा
णिभूतानीत्यनेनोक्तत्वा त्सर्वभूतेषुचात्मानमित्यस्यचात्मैवाभूदित्यनेनोक्तत्वात्। अतो
नायंमंत्रार्थइत्यतआह ॥ पूर्वेति॥ पूर्वमंत्रोक्तस्यसर्वाधारतयासर्वगतत्वस्यात्रानुवादोतो
नपुनरुक्तिरित्यर्थः। नचवाच्यमधिकविधानायानुवादोभवति। नचात्राधिकंकिंचिदिति।

र्वमंत्रोक्तस्य ततोनविजुगुप्सतइत्यंतस्यानुवादेनेत्यर्थभ्रमनिरासाय सर्वाधारतयेत्यादिना पूर्वोक्तशब्दार्थकथनमितिज्ञातव्यं।
मंत्रे यस्त्वित्यादिना सर्वाधारतायाःपृथगुक्तत्वेपि नात्रस्वातंत्र्येणज्ञेयताविवक्षिता। किंतुसर्वभूतेषुचात्मानमित्युक्तसर्वभूतगत
त्वप्रकारतयेतिज्ञापयितुं सर्वाधारतयेत्युक्तं। एवमेवप्रागित्युत्तरवाक्यमपिव्याख्यातव्यं। एतच्चप्रागुपपादितमनुसंधेयं। ननु
तर्ह्यवशिष्टंभाष्यंव्यर्थंस्यादित्यतस्तन्निवर्त्याशंकामुत्थापयति ॥ नचेति ॥ कुतोनवाच्यमित्यतोभाष्येशोकमोहाभावश्चात्रोच्यते

भा०। पूर्वोक्तानुवादेनशोकमोहाभावोपिविजानतश्चात्रोच्यते।

विजानतश्चात्रोच्यतइतिवाक्यद्वयमाश्रित्य तत्राप्याद्यस्यफलाधिक्यप्रदर्शकत्वं द्वितीयस्यसाधनाधिक्यप्रदर्शकत्वंचाश्रित्य पू
र्वमंत्रोक्तफलानुवादपूर्वकंफलांतरप्रदर्शकत्वेनाद्यवाक्यंयोजयति ॥ पूर्वमेवंविदइति ॥ यस्त्वितिमंत्रेसर्वाधारतयासर्वगतत्व
विदइत्यर्थः। अधुना पूर्वमंत्रोक्तसाधनानुवादपूर्वकमधिकसाधनप्रदर्शकत्वेनद्वितीयंवाक्यंयोजयति ॥ प्रागिति ॥ यस्त्विति
मंत्रइत्यर्थः ॥ दर्शनफलमिति ॥ ज्ञानफलमित्यर्थः ॥ अत्रेति ॥ यस्मिन्नितिमंत्रइत्यर्थः। ज्ञानाधिक्यलाभायविशब्दोविशे

पूर्वमेवंविदोभयाभावःफलत्वेनोक्तः। अत्रपुनःशोकमोहाभावो
पि। प्राक्सर्वाधारत्वेनसर्वगतत्वदर्शनफलमुक्तं। अत्रतुविशेषतो
जानतइत्येवंफलेज्ञानेचाधिक्यसद्भावादित्यर्थः। उपलक्षणंचैतत्।
एकत्वमनुपश्यतइत्याधिक्यंचद्रष्टव्यं। तद्भावतइ त्यस्यसर्व
गतत्वस्य तद्दूरइत्यादिनापुनरुच्यमानत्वात्पुनरुक्तिदोषइत्याशंकां

षतइतिव्याख्यातः। यद्यपिविजानतःशोकमोहाभावश्चात्रोच्यतइत्येकवाक्यत्वेनापिभाष्ययोजनाघटते नचैवंचशब्दोव्यर्थः।
पूर्वमंत्रोक्तभयाभावसमुच्चायकइत्युपपत्तेः। तथाप्युक्तन्यायेनाधिकार्थलाभसंभवेकिमेकवाक्यत्वश्रद्धाजाड्येनेत्याशयात्। ए
कवाक्यतायांविजानतइत्यस्यातीवोपयोगादर्शनाच्च। नन्वियंपुनरुक्तिस्तद्दूरइतिवाक्यव्याख्यानावसरेपरिहार्या नात्र। असं

गतत्वादित्यतउक्तं ॥ पुनरुक्तिदोषपरिहारप्रसंगादिति ॥ ७ ॥ उत्तरभाष्यंसंगमयितुंसपर्यगादितिमंत्रप्रतिपाद्यंतावदाह ॥ ज्ञानिनइत्यादिना ॥ तत्रचेति ॥ विष्णुप्राप्तौनिमित्तत्वेनोक्तायामित्यर्थः । निमित्तविशेषाभावेपिपरमेश्वरंप्राप्तस्यशोकाद्य भावेराजादीन्प्राप्तस्यापिशोकाद्यभावःस्यात् । ततश्चद्वितीयानुमानेअप्रयोजकत्वमित्याशयेनोक्तं ॥ राजादीनिवेति ॥ इत्य

पुनरुक्तिदोषपरिहारप्रसंगात्परिहरति ॥ अभ्यासश्चेति ॥ श्रुतिःस्वस्यपरमात्मसर्वगतत्वेतात्पर्यंद्यो तयितुंतदभ्यस्यतीतिनदोषइत्यर्थः । सर्वगतत्वस्येत्युपलक्षणं । अनेजत्तन्नेजतीत्यभयत्वस्यापिद्रष्ट व्यं ॥७॥ ज्ञानिनःशोकाद्यभावेयुक्तित्वेनसपर्यगादितिविष्णुप्राप्तिरुक्ता । तत्रच राजादीनिवपरमे श्वरंप्राप्तस्यापिशोकाद्यभावःकिंनिमित्तइत्यतः शुक्रमित्यादिविशेषणानि । तत्रादेहोक्त्याप्राप्तशं कापरिहाराय कविरित्युत्तरार्धः । तमिमंमंत्रमप्रतीत्यादिपरिहारायपुराणवाक्येनव्याख्याति ॥

तइति ॥ इतियतःशंकाअतस्तन्निरासायेत्यर्थः ॥ तत्रादेहत्वोक्त्येति ॥ शुक्रमित्यादिविशेषणेष्वकायमस्नाविरमितिविशेष णाभ्यामदेहत्वोक्त्येत्यर्थः ॥ प्राप्तशंकेति ॥ यद्यशरीरोविष्णुरित्यादिवक्ष्यमाणरीत्याप्राप्तशंकेत्यर्थः ॥ अप्रतीत्यादीति ॥ आदिपदेनपरोक्तान्यथाप्रतीतेरकायास्नाविरशब्दयोःपौनरुक्त्यस्यचसंग्रहः । ननुबृहद्भाष्ये शुक्रंजीवमादायेत्युक्त्वाशोकेन

---

भा० । अभ्यासश्चसर्वगतत्वस्यतात्पर्यद्योतनार्थः ॥ ७ ॥

उप० । सपर्यगाच्छुक्रमकायमव्रणमस्नाविरंशुद्धमपापविद्धं । कविर्मनीषीपरिभूःस्वयंभूर्याथातथ्यतोर्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्यः ॥८॥

रत्यायुक्तत्वाच्छुक्रोजीवउदाहृतइत्युपन्यस्तेप्रमाणेशोकवत्तायाःशुक्रशब्दार्थत्वप्रतीतेः । कथंशोकराहित्यंशुक्रशब्दार्थइत्यतः शुक्रशब्दस्यशोकराहित्येयोगंदर्शयति ॥ शुचमिति ॥ अनेनशुच्शब्देकर्मण्युपपदेरहत्यागइत्यस्माद्बाहुलकेडप्रत्ययेटिलोपेउपपदांत्यस्यकुत्वेशुक्रमितिसिध्यतीत्युक्तंभवति । एतेनशुक्रंरोचिष्मत्दीप्तिमदित्यपव्याख्यानमपहसितंवेदितव्यं । ननुपूर्णशब्दोक्तधर्मिणःप्रवृत्तिनिमित्तत्वाभावात्पूर्णतइत्ययुक्तं । प्रकरणवशाद्भावप्राधान्येपि नित्यशब्दोऽप्यर्थइत्यतःप्रवृत्तिनिमित्तद्वयं भावप्राधान्यं पंचम्यंतात्तसिंचमनसिनिधायव्याचष्टे ॥ नित्यत्वेति ॥ अव्रणशब्देनोक्तार्थद्वयलाभप्रकारंदर्शयति ॥ व्रणसंचूर्णन

शुक्रमिति ॥ शुचंशोकंरहतित्यजतीतिशुक्रमित्यर्थः । नित्यपूर्णतइति॥नित्यत्वपूर्णत्वाभ्यामित्यर्थः । व्रणसंचूर्णनइत्यतःस्तोकोव्रणःकाले नास्तोकंनित्यं गुणैरस्तोकंपूर्णमिति । पावनत्वात्पावित्र्यहेतुत्वात् ।

इत्यतइति ॥ स्तोकोऽल्पः । अनेनाव्रणमक्षतमित्यपव्याख्यानंनिरस्तंभवति । पावनत्वादित्यस्य पवित्रत्वादितिव्याख्याने अपापत्वातिरिक्तपवित्रत्वाभावादपापविद्धमित्यनेनपुनरुक्तिःस्यादित्यतआह ॥ पावित्र्यहेतुत्वादिति ॥ अनेनशुद्धंनिर्मलमितिपरोक्तंनिरस्तंभवति ॥ साधारणइति ॥ तथाचाकायंदेहवर्जनादितिव्याख्येयं । नतुसामान्यशब्दस्यविशेषेलक्षणामंगीकृत्यलिंगवर्जनादिति । लक्षणायामुख्यार्थानुपपत्तिपूर्वकत्वादत्रचतदभावादितिभावः । अस्त्यत्रापिमुख्यार्थानुपपत्तिरित्याह ॥

भा० । शुक्रंतच्छोकराहित्यादव्रणंनित्यपूर्णतः । पावनत्वात्सदाशुद्धमकायंलिंगवर्जनात् । स्थूलदेहस्यराहित्यादस्नाविरमुदाहृतं ॥

तथापीति ॥ नन्वकायंस्थूलवर्जनात् । लिंगदेहस्यराहित्यादस्नाविरमुदाहृतमित्येवप्रमाणेकिंनोक्तं । पुनरुक्तिपरिहारस्यैवमपि संभवादित्यतआह ॥ स्नावोपलक्षितेति ॥ मांसमज्जादिसप्तधातुविकारस्यस्थूलदेहस्यस्नाविरमात्रत्वानुपपत्तेःस्नावोपलक्षितेत्युक्तं ॥ स्थूलशरीरमेवहिप्रसिद्धमिति ॥ नतुलिंगशरीरं अतोनवैपरीत्येनवक्तुंशक्यमितिभावः । अनेन स्नावाःशिराःयस्मिन्विद्यंतइतिस्नाविरं नस्नाविरंअस्नाविरं । अव्रणमस्नाविरमित्याभ्यांस्थूलशरीरप्रतिषेधइत्यपव्याख्यानंनिराकृतंभवति । ननुयदुक्तंराजादीनिवपरमेश्वरंप्राप्तस्यापिशोकाद्यभावःकिंनिमित्तइत्यतः शुक्रमित्यादिविशेषणानीति । तत्रकिंसर्वेषांविशेषणा

यद्यपिकायशब्दःस्थूलसूक्ष्मशरीरसाधारणस्तथापि अस्नाविरमितिस्थूलशरीराभावस्यपृथगुक्तेरकायंलिंगवर्जनादित्युक्तं । स्नावोपलक्षितधातुमयंस्नाविरं स्थूलशरीरमेवहिप्रसिद्धं । यतोहि ब्रह्मशुद्धंतस्मादपापविद्धं । ततश्चपापमूलस्थूलसूक्ष्मशरीरविधुरं । तथाचदेहनिमित्तशोकादिशून्यं । एवंभूतंचज्ञानीपर्यगात् । सारूप्यादिलक्षणांतद्गतिंगतोभवति ।

नांपरमेश्वरंप्राप्तस्यशोकाद्यभावोपपादकत्वमभिप्रेतमुतैकस्य । नाद्यः । अप्रयोजकत्वेनतदभावात् । नद्वितीयः । अमुकस्येति निर्धारणोपायाभावाद्विशेषणांतरवैयर्थ्यप्रसंगाच्चेत्यतःशुक्रमित्यस्यैवोक्तसाध्योपपादकत्वं । शोकादिशून्यपरमेश्वरसारूप्यादिप्राप्तिमतःशोकाद्यभावनियमात् । इतरेषांतुविशेषणानांसाक्षात्परंपरयाशुक्रत्वोपपादकत्वान्नवैयर्थ्यमित्याशयेनहेतुहेतुमद्भावेन विशेषणानियोजयति॥यतोहीति॥एवंभूतंचेति॥ उक्तप्रणाड्याशोकादिशून्यमित्यर्थः । अनेनराजादिवैषम्यमुक्तंभवति । सपर्यगादित्यस्यहेतोः पूर्वमंत्रोक्तशोकाद्यभावेनसाध्येनान्वयमाह॥अतइति ॥ मंत्रेयत्तच्छब्दावध्याहार्याविितिज्ञापनायातइत्युक्तं । इदमुक्तंभवति । विमतोज्ञानीशोकादिरहितः । शोकादिरहितब्रह्मप्राप्तिमत्त्वात् । योयद्रहितयत्प्राप्तिमान् सतद्रहितः । यथादारिद्र्यरहितराजादिप्राप्तिमान्दारिद्र्यरहितः । सारूप्यादिलक्षणप्राप्तिविशेषस्यविवक्षितत्वान्नसुसेव्यभिचारः । एतदर्थमेवसारूप्यादिलक्षणामित्युक्तं । नचसुप्तेसाध्यस्यापिसत्वान्नव्यभिचारप्रसक्तिरितिवाच्यं । तस्याप्यंतःकरणरूपेणशोकादिमत्त्वात् । नचशोकादिरहितेतिव्यर्थं । विपक्षेव्याघातसूचनार्थत्वात् । शोकरहितब्रह्मसारूप्यंगतः स्वयंचशोकादिमानित्यस्यव्याहतत्वात् । बहिरेवाप्रयोजकत्वपरिहारेब्रह्मप्राप्तिमत्त्वादित्येवहेतुरस्तु । नचब्रह्मणःशोकादिशून्यत्वासिद्धिः । ब्रह्मशोकादिशून्यं स्थूलसूक्ष्मशरीर

अतस्तस्यशोकाद्यभावोयुक्तइतिभावः ।

शून्यत्वात् । व्यतिरेकेणदेवदत्तादिवत् । नचाप्रयोजकता । शोकस्योक्तशरीरद्वयनिमित्तकत्वेनाकारणकार्योत्पत्तिप्रसंगात् । एतदेवाभिप्रेत्योक्तं देहनिमित्तेति ॥ ब्रह्मणोपिस्वरूपदेहवत्त्वेनासिद्धिवारणायस्थूलसूक्ष्मेत्युक्तं । ननुदेहद्वयघटितएकएवहेतुरुतहेतुद्वयं । नाद्यः । स्थूलपदवैयर्थ्यात् । तमोगतेषुव्यभिचारापाताच्च । नद्वितीयः । स्थूलदेहशून्यत्वस्यतमोगतेषुप्रलयकालीनेषुचव्यभिचारित्वात् । सूक्ष्मदेहशून्यत्वस्यतमोगतेष्वनैकांत्यात् । अतएवजडदेहशून्यत्वेतात्पर्यमित्यपिनिरस्तं । प्रलयकालीनेव्यभिचारनिवारणेपितमोगतेतदनिवारणात् । तस्मात्कथमेतदितिचेत्मैवं । शोकादिनिमित्तदेहशून्यत्वस्यहेतुत्वेतात्पर्यात् ।

तमोगतानांस्वरूपदेहस्यविशेषवलेनस्वरूपशोकादिव्यक्तिनिमित्ततायाः सिद्धांतेंगीकृतत्वेनतत्रहेतोरभावेनव्यभिचारशंकानवका
शात् । शोकादिनिमित्तलिंगदेहवतिप्रलयकालीनेपिनव्यभिचारः । नचैवमपिदेहपदंव्यर्थं । असिद्धिपरिहारायपक्षेहेतूपपाद
नार्थत्वात् । यद्वा आनंदाद्यात्मकदेहातिरिक्तदेहशून्यत्वंहेतुरितिनकश्चिद्दोषः । नचस्थूलसूक्ष्मदेहशून्यत्वस्यासिद्धिः । ब्रह्म
स्थूलसूक्ष्मदेहशून्यं पापविधुरत्वा द्व्यतिरेकेणास्मदादिवदित्यनुमानेनतत्सिद्धिसंभवात् । अत्रापि विपक्षेअकारणकार्योत्प
त्तिप्रसंगएवबाधकोज्ञातव्यः । अतएवपापमूलेतिशरीरविशेषणं । नचसाध्येस्थूलपदंव्यर्थमितिवाच्यं । गुणादिकंगुण्यादिना
भिन्नाभिन्नमित्यादाविवोद्देश्यसिध्यर्थत्वसंभवात् । शोकनिमित्तदेहशून्यत्वस्यसाध्यत्वेतात्पर्यान्नोक्तशंकावकाशःइतिवा । न
चात्रापिहेतोरसिद्धिः । ब्रह्मपापविद्धंनभवति जगत्पावित्र्यहेतुत्वादित्यनुमानेनतत्सिद्धेः । अत्रचविपक्षेहेतूच्छेदएवबाधकः ।
नहिस्वयंपापविद्धस्यजगत्पावित्र्यहेतुत्वंसंभावनार्हमिति । ननुशुक्रमित्यादिविशेषणानीतिपूर्वग्रंथे पूर्वार्धगतानांषण्णांविशेषणा
नांशोकाद्यभावोपपादकत्वंप्रतिज्ञाय यतोहीतितदुपपादनपरेऽत्रग्रंथे अव्रणमित्यस्यहेतुत्वानुपपादनाद्विरोधः । पूर्वमादिशब्दे
नतद्व्यतिरिक्तविशेषणविवक्षायामव्रणमित्यस्यमंत्रेवैयर्थ्यापातादितिचेन्मैवं । शुद्धत्वादीनामिवनाव्रणत्वस्यपरंपरयाशोकादिशू
न्यत्वोपपादकत्वमपितु अव्रणत्वाच्छोकादिशून्यं । नहिस्वरूपतोदेहतश्चानादिनित्यमानंदादिगुणपूर्णंब्रह्मशोकादिमद्भवितुम ॥ ३८ ॥
र्हति । विरोधादिति साक्षादेवतदुपपादकत्वमितिज्ञापनायात्राग्रहणोपपत्तेः । इदानींकविरित्याद्युत्तरार्धव्याख्यानरूप मेवंभू

तोपीतिभाष्यंयोजयितुं यदुक्तंप्राक्तत्रादेहत्वोक्त्याप्राप्तशंकापरिहारायकविरित्युत्तरार्धइति तांशंकांतावद्दर्शयति ॥ यद्यशरीरइत्यादिना ॥ पूर्वार्धेअकायास्नाविरशब्दाभ्यामशरीरत्वस्योक्तत्वादितिभावः । विष्णुर्नाशरीरः स्रष्टृत्वात् । घटस्रष्टृवदितिविवक्षितानुमाने विपक्षेहेतूच्छेदरूपंबाधकमुक्तं ॥ यद्यशरीरइति ॥ यद्वा यदिविष्णुरशरीरःस्यात्तदास्रष्टानस्यादितितर्कएवानेनोक्तः । तत्रकुलालादौव्यतिरेकव्याप्तिंसप्रमाणकमाह ॥ घटादीति ॥ विवर्तवादःपरिणामवादश्चेतिद्विविधोहिमायावादः । तत्राद्यमतानुसारेणदृष्टांतदार्ष्टांतिकयोर्वैषम्यमाशंक्यनिषेधति ॥ नचेति ॥ इयंचशंका मंत्रेयाथातथ्यतइत्येतद्व्यावर्त्यत

यद्यशरीरोविष्णुर्नतर्हितस्यजगत्सर्जनाद्युपपद्यते । घटादिसृष्ट्यादौशरीरान्व
यव्यतिरेकानुविधानदर्शनात् । नचवाच्यं शुक्तिकायामिवरजतं परमात्मनि
जगदारोपितमेव । अतोनशरीरापेक्षेति । बाधाभावेनतत्सत्यत्वनिश्चयात् ।

याकथितेतिद्रष्टव्यं ॥ आरोपितमेवेति ॥ नतुकुलालादिनाघटादिकमिवपरमात्मनाजगत्सृज्यमित्येवशब्दार्थः । अधिष्ठानस्याप्यारोपार्थंशरीरसापेक्षत्वेशुक्तिकायाअपितत्स्यादित्याशयेनदृष्टांतोपादानमितिद्रष्टव्यं । कुतोनवाच्यमित्यतःसन्घटः अहंदुःखीत्यादिप्रत्यक्षेण । प्रमाणदृष्टत्वाद्यनुमानेन । विश्वंसत्यमित्याद्यागमेनचजगतःसत्यत्वेनप्रमितत्वादित्याह ॥ तत्सत्यत्वेति ॥ अनेनयाथातथ्यतइत्येतद्व्याख्यातंभवति । ननुतर्हिशुक्तिरजतादिसत्तापिप्रत्यक्षेणसिध्येदविशेषादित्यतोबाधकभावाभावाभ्यांविशेषादित्याशयेनोक्तं बाधाभावेनेति ॥ ननुनसृष्ट्यादिसमयेपरमेश्वरस्यादेहत्वं । येनसृष्ट्याद्यनुपपत्तिः । किंतुसमयां

तरे । अतोनादेहत्वोक्तिविरोधोपीत्याशंक्यनिषेधति ॥ नचेति ॥ इयंचशंकामंत्रेशाश्वतीभ्यःसमाभ्यइत्येतद्व्यावर्त्यतयोक्तेति ज्ञातव्यं । कुतोनेत्यतःप्रवृत्तस्यशाश्वतीभ्यःसमाभ्यइत्यस्यतात्पर्यमाह ॥ जगदिति ॥ अनाद्यनंतंजगदेतदीदृक्प्रवर्ततेनात्रविचार्यमस्तीत्यादिप्रमाणेनप्रमितत्वादित्यर्थः । अत्रप्रमितत्वादित्युक्त्या पूर्वत्रनिश्चयादित्युक्त्याचमंत्रेविशेषणद्वयस्यासिद्धिःपरिहृता । अतएवैतत्पदद्वयव्याख्यानरूपे ससत्यंजगदेतादृगितिप्रमाणे एतादृगित्यनेनसत्यत्वानाद्यनंतत्वयोःप्रमितत्वमुक्तमिति

नचादेहत्वस्यजगत्सृष्ट्यादेश्चकालभेदेनव्यवस्था । जगत्सृष्ट्यादिप्रवाहस्यानाद्यं
ततयाप्रमितत्वात् । अतः सत्यानाद्यनंतकालीनजगदुत्पत्त्यादिकारणस्यविष्णोःक
थमशरीरत्वमित्याशंकापरिहारायोक्तस्यकविरित्यादेर्व्याख्यानं । एवंभूतोपीति ॥
एवंभूतोशरीरोपिसपुरुषोत्तमः सत्यंप्रवाहतोनित्यमपिजगत्ससृजइतिसंबंधः ॥

ज्ञातव्यं । एवंभूतोपीत्येतत् शुक्रत्वादिविशिष्टोपीतिप्रतीतिनिरासायाकायमस्नाविरमितिपदद्वयोक्ताशरीरत्वपरामर्शकतयानूद्यव्याकुर्वन्नशरीरत्वस्यकवित्वेनविरोधस्यानाशंकना देवंभूतोपिकविरितिशब्दितइत्यसंगतमित्यतःससृजइत्यनेनसंबंधान्नासंगतिरितिभावेनव्यवहितानांपदानामन्वयंचदर्शयति ॥ एवंभूतोशरीरोपीत्यादि ॥ एतादृगित्यस्यवैयर्थ्यमाशंक्यप्रमाणसूच

भा० । एवंभूतोपिसार्वज्ञात्कविरित्येवशब्द्यते । ब्रह्मादिसर्वमनसांप्रकृतेर्मनसोपिच । ईशितृत्वान्मनीषीसपरिभूःसर्वतोवरः । सदाऽनन्याश्रयत्वाच्चस्वयंभूःपरिकीर्तितः । ॥ ३९ ॥

कत्वान्नतदित्याशयेनव्याचष्टे ॥ सत्यत्वादिनेति ॥ आदिपदेनप्रवाहतोनित्यत्वस्यग्रहणं ॥ अत्रनित्यमेवेत्येवशब्दस्यएतादृगेवेतिसंबंधोभिप्रेतः । नतुयथाश्रुतः । सत्यमित्यनेनविरोधापातात् । अतएवैवंभूतोपीत्यपिशब्दस्यावृत्तिमाश्रित्य नित्यमपीति पूर्वमुक्तं । अन्यथानित्यमेवेत्यवक्ष्यत् । तथाच यथालोकेअयंघटइत्युक्त्वापुनर्घटोभवत्येवेत्युक्त्याप्रमितत्वंप्रतीयते तथेहापि जगत्सत्यंप्रवाहतोनित्यमपीत्युक्त्वापुनरेतादृगेवेत्युक्त्याप्रमितत्वंलभ्यतइतिभावः । परमेश्वरस्यादेहत्वेप्राप्तशंकायास्तत्परिहारस्यचसृष्ट्यादिसर्वविषयत्वात्ससृजेइतिसृष्टिमात्रोक्तिरयुक्तेत्यतआह ॥ ससृजइत्युपलक्षणमिति ॥ स्थित्यादीनामुपलक्षणमि

एतादृगिति ॥ सत्यत्वादिनाप्रमितमित्यर्थः । ससृजइत्युपलक्षणं । प्रवाहतो
नित्यत्वेपिपूर्वोत्तराणांजगतांवैचित्र्यंसंभवति । तन्नास्तीतिस्वरूपकथनं ।
अनादीति ॥ नियमेनप्रवाहैकप्रकारतइतिप्रवाहिणामेकप्रकारत्वमभिप्रैति ।

त्यर्थः । अनेनमंत्रेव्यदधादित्युपलक्षणमित्युक्तंभवति । नन्वनादीत्यादिनापूर्वोत्तरजगतांवैचित्र्याभावोक्तिर्नप्रकृतसंगता । अदेहत्वस्यजगत्सृष्ट्यादेश्चकालभेदेनव्यवस्थाशंकायाःजगत्प्रवाहेनित्यत्वोक्तिमात्रेणपरिहारसंभवादित्यत उक्तशंकापरिहारानुपयोगेपि वस्तुस्थितिकथनरूपत्वान्नदोषइत्याह ॥ प्रवाहतइति ॥ ननुजगतोनेकप्रकारत्वशंकायां प्रवाहस्यैकप्रकारत्वकथनमसंगतमित्यतः प्रवाहशब्दस्यप्रवाहिषुलक्षणामभिप्रेत्याह ॥ नियमेनेति ॥ नियमेनेत्यस्योत्तरशेषत्वभ्रमनिरासायात्रसंबंधोदर्शितः।

भा० । ससत्यंजगदेतादृङ्नित्यमेवप्रवाहतः । अनाद्यनंतकालेषुप्रवाहैकप्रकारतः। नियमेनैवससृजेभगवान्पुरुषोत्तमः ।

ननूक्तशंकापरिहारस्यनियमेनप्रवाहैकप्रकारतइत्येतावतैवसिद्धेरनाद्यनंतकालेष्वितिव्यर्थमित्यतोमंत्रगतपंचम्याः सप्तमीत्वेनविप रिणामज्ञापनार्थत्वान्नतदित्याशयेनाह ॥ तदनेनेति ॥ तच्चतदिदंचतदिदं तेन । अनाद्यनंतकालेष्वित्यनेनेत्यर्थः । इतीत्यतः परं पंचम्यंतमितिशेषः । पंचम्याःसप्तम्यर्थत्वेनलब्धंयाथातथ्यतइत्यादिमंत्रवाक्यार्थमन्वयप्रदर्शनपूर्वकमाह ॥ अनाद्यनंते ति ॥ याथातथ्यतइत्यस्ययाथार्थ्येनेतिव्याख्यानेनतृतीयांतात्तसिरित्युक्तंभवति । वर्तमानानपीतिमंत्रेअध्याहारः । अशरीर स्याप्यारोपाधिष्ठानत्वेनस्रष्टृत्वमुपपद्यतइत्यन्यथासिद्धिशंकायाःयाथार्थ्येनवर्तमानानित्यनेननिरासादशरीरत्व यथार्थस्रष्टृत्वयो

तदनेनशाश्वतीभ्यःसमाभ्यइतिसप्तम्यर्थेव्याख्यातंभवति ॥ अनाद्यनंत संवत्सरेषुयाथार्थ्येनवर्तमानानपीत्यर्थः । अशरीरस्यजगत्सृष्ट्यादिनिर्वा हार्थमाह ॥ सार्वज्ञादिति ॥ एवाह्येवैवाहीतिवत् कविरित्येवकविरित्येवं

र्विरोधस्फोरणायापीत्युक्तं । एतस्यार्थान्महदादीन्व्यदधादुत्पादयामासेतिमंत्रेणान्वयः । अनेनयाथातथ्यतः । यथातथाभावो याथातथ्यं । यथाभूतकर्मफलसाधनतः अर्थान्कर्तव्यपदार्थान् व्यदधात् । यथानुरूपंविभजन्शाश्वतीभ्योनित्याभ्यःसमा भ्यःसंवत्सरेभ्यःप्रजापतिभ्यःइत्यपव्याख्यानमपहस्तितंवेदितव्यं । ननुशुक्रमित्यादिशब्दवाच्यत्वस्याप्युक्तत्वेन कविरित्येवश ब्दतइत्यवधारणार्थकैवशब्दानुपपत्तिरित्यतोनायमेवशब्दःकिंतुबिंदुलोपेनैवंशब्दः । एवशब्दत्वेपिवा अव्ययानामनेकार्थत्वे नएवंशब्दार्थभूतप्रकारार्थकएवनावधारणार्थकोऽतोनोक्तदोषइत्याशयेनानूद्यव्याचष्टे ॥ कविरित्येवकविरित्येवमिति ॥

इदंचव्याख्यानंभाष्यकृत्संमतमित्याशयेनोक्तमेवाह्येवैवाहीतिवदिति। भगवत्पादैःकर्मनिर्णयेविदामघवन्नितिखंडव्याख्यानावसरे एतद्वाक्यस्य एवंहिएवमेवहीतिव्याख्यातत्वेन तद्वदिहापिव्याख्यायतइत्यर्थः। कर्मनिर्णये एवहीत्यस्यैवंहीतिव्याख्यानं। एवैवही त्यस्यैवमेवहीतिव्याख्यानं। दैर्घ्यंतुसांहितमितिज्ञातव्यं। यद्यप्येवाहीतिवदित्येतावतैवप्रकृतनिर्वाहात्तावदेवोदाहर्तव्यं। तथापि स्पष्टत्वार्थमधिकोदाहरणंकृतमित्यवधेयं। नचात्रेतिशब्देनैवप्रकारसमर्पणादेवंशब्दोव्यर्थइतिवाच्यं। अथवेत्यादिव दित्येवमितिनि पातसमुदायत्वांगीकारेणतदनवकाशात्। नचसार्वज्ञादेवकविरितिशब्द्यतइतिभिन्नक्रमेणैवशब्दसंबंधसंभवात्किमेवंव्याख्यानेने

परिभवविसर्वंवशीकरोतीतिपरिभूःसर्वतोवरः। स्वयमेव परमनपेक्ष्य भवतीतिस्वयंभूः। सदानन्या श्रयः। चशब्दौविशेषणसमुच्चयार्थौ। ननुशरीराधीनत्वात्सर्जनादेःकथंसार्वज्ञादिनाघटतइत्यतआह

तिवाच्यं। परेणापि कविःसर्वदृगितिव्याख्यातत्वेनापव्याख्याननिरासादिप्रयोजनाभावेनतथासंबंधस्यव्यर्थत्वादित्याशयात्। तात्पर्यार्थपरंभाष्यमित्यभिप्रेत्याक्षरार्थंदर्शयति॥ परिभवतीति॥ स्वयंभूःशब्देन सदानन्याश्रयत्वलाभप्रकारंदर्शति॥ स्वयमे वेति॥ ननुस्वयंभूशब्दवाच्यत्वेनिमित्तांतरानुक्त्या समुच्चेतव्याभावादनन्याश्रयत्वाच्चेतिचशब्दानुपपत्तिः। प्रकृत्यामनसोपिचे त्यत्रापिशब्देनैवब्रह्मादिमनःसमुच्चयसिद्धेश्चशब्दोव्यर्थइत्यतआह॥ चशब्दौविशेषणसमुच्चयार्थाविति॥ स्वयंभूश्चमनीषी


चेतिविशेषणसमुच्चायकावेवचशब्दौनतुयथाश्रुतसंबंधेननिमित्तसर्वमनःसमुच्चायकौ येनोक्तदोषःस्यादितिभावः। ननुपरमेश्वर

स्यसदेहत्वेअकायत्वोक्तिविरोधइत्यतोव्यवस्थयातंपरिहरति ॥ जडशरीरेति ॥ देहवत्त्वस्यस्रष्टृत्वेहेतुत्वलाभाययत्तच्छब्दाव
ध्याहृत्ययोजयति ॥ यतएवंभूतइति ॥ ज्ञानाद्यात्मकदेहवानित्यर्थः । ननुविग्रहवत्त्वांगीकारेततएवसर्जनाद्युपपत्तेःकविरित्या
दिनासार्वज्ञ्यादिवर्णनंव्यर्थमित्यतआह ॥ सज्ज्ञानाद्यात्मकेति ॥ अत्रसच्छब्देनपारतंत्र्यादिदोषराहित्यस्यविवक्षितत्वादन्ये
षामविद्यमानमितिघटते । व्यदधात्निर्मितवान् निर्माणशक्तिप्रदर्शनार्थंकविरित्यादीति विष्णुतत्वनिर्णयटीकायामपिकवित्वा

॥सज्ज्ञानेति॥ जडशरीराभावेपि सज्ज्ञानाद्यात्मकशीर्षादिमान्भवति ।
यतएवंभूतस्तस्माज्जगत्ससर्जेतियोजना । सज्ज्ञानाद्यात्मकविग्रहवत्त्वम
न्येषामविद्यमानं तस्योपपादयितुंसार्वज्ञादिमाहात्म्यमुक्तमितिभावः ।

दीनांसज्ज्ञानात्मकविग्रहत्वोपपादकत्वेनैवनिर्माणशक्तिप्रदर्शकत्वंविवक्षितं नतुसाक्षात् । अतोनविरोधः । यद्वाविग्रहवतोपिप
रमेश्वरस्यकुलालादिवन्नानंतजगन्निर्मातृत्वंयुक्तं । तदुपयुक्तसार्वज्ञाद्यभावादितिशंकापरिहारायकवित्वादीनांनिर्माणशक्तिप्रदर्श
कत्वंतत्रोक्तं । अत्रतुप्रकारांतरेणतेषामुपयोगउक्तइतिनकोपिविरोधइतिज्ञातव्यं । सविष्णुंपर्यगाद्यतइतिप्रमाणशेषेण उत्तरमं
त्रस्यसंगतिसूचनपूर्वकं सपर्यगादित्येतज्ज्ञानिविषयतयाव्याख्यातं । तेनपरोक्तसंगतिव्याख्यानयोरयुक्तत्वंसूचितमितिभावेन

---

भा० । सज्ज्ञानानंदशीर्षोसौसज्ज्ञानानंदबाहुकः । सज्ज्ञानानंददेहश्चसज्ज्ञानानंदपादवान् । एवंभूतोमहाविष्णुर्यथार्थंजगदीदृशं । अना
द्यनंतकालीनंससर्जात्मेच्छयाप्रभुरितिवाराहे ॥ ८ ॥



ससंगतिकंतद्व्याख्यानंदूषयितुमनुवदति ॥ अपरेत्विति ॥ अयंमंत्रइति ॥ सपर्यगादित्यादिकोमंत्रइत्यर्थः ॥ एतदपीति ॥
नकेवलंशुक्रमित्यादिकमित्यपेरर्थः । तदेवव्याख्यानंदर्शयति ॥ सआत्मेति ॥ शुक्रमित्यादिकमस्नाव्रीत्याद्वितीयांतमभ्युपे
यते । आद्यंनिराचष्टे ॥ शुक्रमित्यादेरिति ॥ अन्वयाभावेति ॥ विशेष्यभूतात्मवाचिसइतिप्रथमांतेनान्वयाभावप्रसंगादि
त्यर्थः । द्वितीयमाशंक्यनिराकरोति ॥ नचैतदिति ॥ कुतोनेत्यतआह ॥ लिंगेति ॥ शुक्रमित्यादेर्विशेषणस्यप्रथमांतत्वे न
पुंसकत्वावश्यंभावात्सइतिविशेष्यस्यचपुल्लिंगत्वाल्लिंगव्यत्ययेनविशेषणविशेष्यभावानुपपत्तिरित्यर्थः । नचघटोद्रव्यमित्यादिव

अपरेतु योयमतीतैर्मंत्रैरुक्तआत्मासस्वेनरूपेणकिंलक्षणकइत्यपेक्षायामयंमं
त्रइत्युक्त्वा सपर्यगादित्येतदप्यात्मविषयंव्याकुर्वते । सआत्मापर्यगाद्व्यासो
भूदिति । तत्त्वसत् । शुक्रमित्यादेर्द्वितीयांतस्यान्वयाभावप्रसंगात् । नचैतत्प्र
थमांतमात्मनएवविशेषणं लिंगव्यत्ययात् । विपरिणामस्त्वगतिकागतिः ।

दुपपत्तिः। तत्रनियतलिंगत्वात्। अत्रशुक्रमित्यादीनामनियतलिंगत्वात् । अनियतलिंगानांविशेषणानांविशेष्यनिघ्नत्वावश्यंभावा
दितिभावः। ननुनलिंगव्यत्ययः। शुक्रमित्यादीनामपिपुल्लिंगत्वेनविपरिणामांगीकारात् । यथोक्तंपरेण । शुक्रमित्यादीनिवचांसि
पुल्लिंगत्वेनविपरिणेयानि । सपर्यगादित्युपक्रम्यकविमनीषीत्यादिनापुल्लिंगत्वेनोपसंहारादितीत्यतआह ॥विपरिणामस्त्विति॥
अगतिकागतिः । गत्यंतररहितागमनिकेत्यर्थः । अस्मदुक्तरीत्याशुक्रमित्यादिद्वितीयांतानां सपर्यगादित्युक्तप्राप्तिकर्मत्वेन

कविरित्यादिप्रथमांतानां व्यदधादित्युक्तसृष्ट्यादिकर्तृत्वेन यथाश्रुतान्वयसंभवे विपरिणामांगीकारोऽनुचितइतिभावः । स्वयं भूरित्यस्यापव्याख्यानंनिराकरोति ॥ स्वयमेवेति ॥ विरुद्धमिति ॥ मनीषीमनसईशिता परिभूःसर्वेषामुपर्युपरिभवतीतिपर व्याख्यानानुसारेण भाष्यकृद्व्याख्यानानुसारेणवा सर्वभेदस्यैवप्राप्त्यासर्वात्मकत्वंविरुद्धमित्यर्थः । एवंसपर्यगादित्येतद्व्याख्या नंनिराकृत्य मंत्रस्यपरोक्तांसंगतिमपिनिराकरोति ॥ नचेति ॥ नापीत्यर्थः ॥ एवंविधमिति ॥ कविरित्याद्युक्तसार्वज्ञादिवि शिष्टमित्यर्थः । तेषांनिर्विशेषत्ववादिनामितिहेतुगर्भंविशेषणं । ततश्चास्यमंत्रस्यनिष्कृष्टात्मप्रतिपादकत्वाभावाद्योयमतीतैर्मंत्रै रित्युक्तसंगत्यनुपपत्तिरितिभावः । यद्वास्वयमेवसर्वंभवतीतिव्याख्यानेदोषांतरमाह ॥ नचेति ॥ एवंविधं चेतनाचेतनसर्व

स्वयमेवसर्वंभवतीतिस्वयंभूरितिचमनीषीपरिभूरित्यनेन
विरुद्धं । नचैवंविधमात्मनोनिष्कृष्टंरूपंतेषामिति ॥ ८ ॥

जगदात्मकं । तथाच निष्कृष्टात्मस्वरूपप्रतिपादनायप्रवृत्तेऽत्रमंत्रेऽतथाभूतसर्वात्मकत्वप्रतिपादनमसंगतमितिभावः । भा० ॥ ८ ॥ ततश्चायंमंत्रार्थः ॥ पूर्वमंत्रेज्ञानिनःशोकाद्यभावउक्तः तत्रहेत्वाकांक्षायामाह ॥ सपर्यगादिति ॥ यतोज्ञानीपरमे श्वरप्रसादात्विष्णुंपर्यगात् सम्यक्प्राप्नोत्येव परमेश्वरसारूप्यलक्षणांगतिंगतोभवतीतियावत् । अतःशोकाद्यभावोयुक्तः । परमेश्वरसारूप्येपिकुतस्तदभावः । राजादिसारूप्यवतस्तदभावादित्यतउक्तं ॥ शुक्रमिति ॥ शुचंशोकंरहतित्यजतीतिशुक्रं । शोकादिरहितब्रह्मसारूप्यंगतस्यशोकाद्यभावोयुक्तइतिभावः । ब्रह्मणःशोकादिराहित्यमेवकुतः । यतोऽकायं । शोकहेतुलिंग

देहवर्जितं । तथाअस्नाविरं स्नावोपलक्षितसप्तधातुमयस्थूलशरीरवर्जितं । अकायत्वादिकमपिकुतः । यतोअपापविद्धं देहारंभकपापशून्यं । तदपिकुतः । यतःशुद्धं जगत्पावित्र्यनिमित्तं । नह्येवंभूतेपापंसंभावनार्हं । किंचयतोअव्रणं । नित्यत्वेसत्यानंदादिगुणपूर्णं । अतोपिशुक्रं । ननुब्रह्मणोदेहशून्यत्वेश्रुत्यादिसिद्धसर्वजगत्सर्जनादिविरोधः । तस्यदेहसापेक्षतायाःघटादौदृष्टत्वादित्यतःकविरित्याद्युत्तरार्धः । तत्रादौसज्ज्ञानानंददेहवानित्युपस्कर्तव्यं । यतःसज्ज्ञानानंददेहवान् अतोऽर्थान्महदादीन्व्यदधात्उत्पादयामास । स्थित्याद्युपलक्षणमेतत् । ननुजगदारोपाधिष्ठानत्वरूपजगत्स्रष्टृत्वस्यशरीरानपेक्षत्वात्किंतदंगीकारेणेत्यतोर्थान्विशिनष्टि ॥ **याथातथ्यतइति** ॥ तृतीयांतात्तसिः वर्तमानानितिशेषः । अबाधितप्रत्यक्षादिसिद्धतयायाथार्थ्येन

अंधंतमःप्रविशंतीत्यादिमंत्रानप्रतीत्यन्यथाप्रतीतिनिरासायस्मृत्यैवव्याचष्टे ॥ **अन्यथोपासकाइति** ॥

वर्तमानानित्यर्थः । नचादेहत्वस्यजगत्सृष्ट्यादेश्चकालभेदेनव्यवस्था । जगत्सृष्ट्यादिप्रवाहस्यानाद्यनंततयाप्रमितत्वात् । तदेतदुक्तं ॥ **शाश्वतीभ्यःसमाभ्यइति** ॥ पंचमीसप्तम्यर्थे । अनाद्यनंतवत्सरेषुव्यदधात् । सज्ज्ञानाद्यात्मकदेहवत्त्वमन्येषामविद्यमानंपरमेश्वरस्योपपादयितुंसार्वज्ञ्यादिमाहात्म्यमुक्तंकविरित्यादिविशेषणैः । कविःसर्वज्ञः । मनीषीरमाब्रह्मादिमनसामीशिता परिभवतिसर्ववशीकरोतीतिपरिभूः सर्वतोवरः । स्वयमेवपरमनपेक्ष्यभवतीतिस्वयंभूः सदानन्याश्रयइति ॥ खं० ॥ ८ ॥ इत्यादिमंत्रानिति ॥ आदिपदेनसंभूत्यामृतमश्नुतइत्यंतामंत्राःग्राह्याः ॥ **अन्यथोपासकाइतीति** ॥ एतच्चमंत्रषट्कव्या

---

उप० । अंधंतमःप्रविशन्तियेऽविद्यामुपासते । ततोभूयइवतेतमोयउविद्यायांरताः ॥ ९ ॥

ख्यानरूपकौर्मइत्यंतस्मृतिप्रतीकग्रहणमितिमंतव्यं । ननुमंत्राएवव्यर्थास्ततस्तद्व्याख्यानपरंभाष्यंसुतरामनर्थकमित्यतस्त्रिकद्वये आद्यत्रिकस्यतावत्ससंगतिकंप्रतिपाद्यमाह ॥ यथावदित्यादि ॥ मोक्षसाधनमित्युक्तमिति ॥ ततोनविजुगुप्सते तत्रको मोहःकःशोकइतिभयशोकाद्यभावसाधनत्वोक्त्या तद्रूपमोक्षसाधनत्वमुक्तमित्यर्थः ॥ नकेवलंतदिति ॥ मोक्षसाधनमित्यनु वर्तते । केवलमसहायं तत्परमात्मज्ञानं मोक्षसाधनंनेत्यर्थः ॥ तत्रतावदिति ॥ तत्र आद्यमंत्रत्रयेप्याद्येनमंत्रेणताव दन्य

यथावत्परमात्मज्ञानंमोक्षसाधनमित्युक्तं । नकेवलंतत् । किंनामान्यथाज्ञाननिंदासमुचित मेवेत्येतदर्थप्रतिपादकमाद्यमंत्रत्रयं । तत्रतावद्यथावज्ज्ञानस्येवान्यथाज्ञाननिंदायाअप्या वश्यकत्वोपपादनायान्यथाज्ञानस्योक्तमसुर्यलोकसाधनत्वमनूद्यान्यथाज्ञानानिंदनस्यततो धिकानर्थसाधनत्वमाद्येनमंत्रेणोच्यते । तस्यार्थोऽन्यथेति ॥ उपासकाः विष्णोरितिशेषः ।

थाज्ञानाऽनिंदनस्यततोन्यथाज्ञानादधिकानर्थसाधनत्वमुच्यतइत्यन्वयः । तर्हिपूर्वार्धस्यवैयर्थ्यं । नचान्यथाज्ञानस्यानर्थसाध नत्वंवक्तुंतदितिवाच्यं । तस्यासुर्यानामेतिमंत्रेणोक्तत्वेनपुनरुक्तिप्रसंगादित्यत उक्तानुवादरूपत्वान्नदोषइत्याशयेनोक्त मन्यथा ज्ञानस्योक्तमसुर्यलोकसाधनत्वमनूद्येति ॥ अनूद्येत्यतःपूर्वं पूर्वार्धेनेतिशेषः । ननुअनुवादोपिव्यर्थः । अधिकविधानाद्यभावा ॥ ४३ ॥
दित्यतउक्तं । यथावज्ज्ञानस्येवान्यथाज्ञाननिंदायाअप्यावश्यकत्वोपपादनायेति ॥ उपासनाकर्मानुक्तेराह ॥ विष्णोरितिशेष

भा० । अन्यथोपासकायेतुतमोंधंयांत्यसंशयम् ।

इति ॥ अनुपपत्तिस्फोरणायवा अध्याहृतस्यसंबंधज्ञापनायवा उपासकाइत्यनुवादः । ननुयेऽविद्यामुपासते यतस्तद्वेदेतिमंत्रे अन्यथोपासकायेतु येविदुःसहसज्जनाइतिभाष्येच ज्ञानोपासनयोर्व्यामिश्रोक्तिरयुक्ता । अनिर्णयप्रसंगादित्यतआह ॥ सर्वत्रे ति ॥ मंत्रेभाष्येचेत्यर्थः ॥ उपासनापर्यंतत्वादिति ॥ सामान्यशब्दस्यविशेषेलक्षणेतिभावः । यद्यप्युपासनाशब्दस्यज्ञान परत्वेनांगीकारेणापिव्यामिश्रोक्तिघटनासंभवति । तथापि तमःप्राप्तिरूपानर्थस्य मृत्यूत्तारणादिरूपमोक्षस्यचोपासनाफलत्वेपि ज्ञानमात्रफलत्वाभावादेवमेवघटनाकृतेतिद्रष्टव्यं । भाष्यमंत्रयोर्व्याख्यानव्याख्येयभावंघटयति ॥ तत्रेति ॥ आद्यमंत्रइत्य

सर्वत्रज्ञानशब्दस्योपासनापर्यंतत्वाद्व्यामिश्रोक्तिः । तत्राविद्यापदंविषयि वाचकंविषयस्यान्यथाकारस्यलक्षकमित्यभिप्रेत्याविद्यामुपासतइत्येतदन्य थोपासकाइतिव्याख्यातं । ततोऽन्यथाज्ञानिप्राप्यात्तमसोऽधिकमिव ।

र्थः ॥ विषयिवाचकमिति ॥ विद्याविरुद्धमिथ्याज्ञानवाचकमित्यर्थः । विषयविषयिभावरूपशक्यसंबंधसूचनायविषयिवाच कमिति विषयस्येतिचोक्तं । मिथ्याज्ञानरूपाविद्यायाउपास्यत्वाभावान्मुख्यार्थानुपपत्तिर्द्रष्टव्या । ननुततइत्यनेनतमसःपरामर्शः क्रियते उतान्यथोपासकानां । नाद्यः । स्वतःस्वस्याधिक्यस्यबाधितत्वात् । नद्वितीयः । विजातीयत्वेनाधिक्यासंभवादित्यतो न्यथोपासकास्तमोयांतीतिवाक्यतात्पर्यार्थपरामर्शान्नकश्चिद्दोषइत्याशयेनाह ॥ ततइति ॥ ननुमंत्रव्याख्यानरूपेप्रमाणे व्य

भा० । ततोधिकमिवव्यक्तंयांति

क्तमितिकिंमंत्रपदानुवादः उतव्याख्यानं । नाद्यः । मंत्रेतत्पदाभावात् । नद्वितीयः । व्याख्येयपदाभावादित्यतोद्वितीयपक्ष मंगीकृत्याह ॥ इवार्थमाहेति ॥ अनेनभाष्येअधिकमिवेतिमंत्रगतेवशब्दानुवादेन व्यक्तमितितद्व्याख्यानंकृतमित्युक्तंभवति । ननुइवशब्दस्यव्यक्तत्वार्थत्वे भूयइवेत्यस्यव्यक्तमधिकंसम्यगधिकमित्यर्थःसंपद्यते । प्रकारांतराभावात् । तथाचान्यथोपासका येस्यतेयांतिह्यधरंतमः ॥ ततःकिंचिद्विशेषेणदुर्ज्ञानस्याविनिंदकाइ त्येतन्मंत्रव्याख्यानरूपबृहद्भाष्यविरोधः । तत्रकिंचिदित्य नेनेवशब्दस्याल्पार्थतयाव्याख्यानेनाल्पाधिकतमःप्राप्तेःफलत्वेनोक्तत्वात् । नचतत्रकिंचिदिति नेवशब्दस्यव्याख्यानमितिवा च्यं । उन्मूलत्वापातात् । इवशब्दस्यव्याख्यानाभावप्रसंगाच्च । उपमार्थेतथाल्पत्वेपीवशब्दःप्रयुज्यतेइतितत्रैवपूर्वोक्तप्रमाण

इवार्थमाह ॥ व्यक्तमिति ॥

प्राप्ताल्पत्वार्थतायाहातुमशक्यत्वाच्च । किंचिदित्यस्येवशब्दार्थत्वाभावेपि विरोधापरिहाराच्चेतिचेन्मैवं । अत्राप्यधिकमित्यस्य किंचिदधिकमित्येवार्थोभिप्रेतः । व्यक्तत्वार्थकेवशब्दस्यतुअन्यथोपासकास्ततोल्पमधिकंतमोयांतीतिव्यक्तंप्रमितमितिभिन्नक्रमे णसंबंधस्यविवक्षितत्वेनविरोधाभावात् । इयांस्तुविशेषः । अत्रभूयइत्यस्यैवकिंचिदाधिक्यार्थकत्वमंगीकृत्येवशब्दोव्यक्तत्वार्थ तयाव्याख्यातः । तत्रेवशब्दःकिंचिदित्यर्थकत्वेनेति । नन्वन्यथाज्ञानिप्राप्यतमसःसकाशात् तदनिंदकानामधिकतमःप्राप्तिर्भ वतीत्युक्तंतदयुक्तं । अन्यथाज्ञानानिंदनस्योभयोरपिसमत्वेनाधिकतमःप्रापकाभावात् । अंगीकृत्यचैतदुक्तं । वस्तुतस्तु अन्य

थाज्ञानानिंदकस्यविद्यारतत्वेनान्यथोपासकापेक्षयासमीचीनत्वेनानिंदनप्रयुक्ताल्पतमःप्राप्तेरेववक्तुमुचितत्वादितिचेत् । अस्त्य
त्रविवेकः । नतावदन्यथोपासकापेक्षया तदनिंदकस्यविद्यारतत्वप्रयुक्तंसमीचीनत्वं । अनिंदनदोषदूषितस्यविद्यारतत्वस्यभर्जि
तबीजवदकिंचित्करत्वेनसामीचीन्यानापादकत्वात् । नाप्यन्यथाज्ञानानिंदकत्वेनोभयोःसाम्यं । अन्यथोपासकस्यसम्यगाचा
र्योपदेशाभावेनान्यथाज्ञाननिंदनस्यकर्तव्यत्वेनाप्राप्ततया तत्त्यागिनोऽप्राप्तत्यागित्वात् । विद्यारतस्यतु सम्यगाचार्योपदेशाव
श्यंभावेन ततएवब्रह्मनिर्गुणत्वादिनिंदनस्यकर्तव्यत्वेनप्राप्तस्याप्यकरणेनप्राप्तनिष्ठाहीनत्वात् अप्राप्तत्यागिनःप्राप्तनिष्ठाहीनोह्य
धिकदोषवान् । आचार्योपदेशाभावेनाप्राप्तनित्यकर्मादित्यागिनःसकाशादाचार्योपदेशादिनाप्राप्तेनित्यकर्मादौनिष्ठाहीनोदोष
वानितिलोकेप्रसिद्धत्वात् अतोऽन्यथोपासकापेक्षयाअन्यथाज्ञानानिंदकस्याधिकपापित्वाद्युक्तमधिकतमःप्राप्तिकथनं । तदेत
त्सर्वमुक्तमेतन्मंत्रव्याख्यानरूपेबृहद्भाष्ये । अन्यथोपासकायेस्युतेयांतिह्यधरंतमः । ततःकिंचिद्विशेषेणदुर्ज्ञानस्याविनिंदकाः ॥
सम्यगाचार्यवचनमवज्ञायविरोधिनि । सत्वबुद्धिंयतःकुर्युस्ततस्तेधिकपापिनः । अप्राप्तत्यागिनःप्राप्तनिष्ठाहीनोहिदोषवान्
इति । सम्यगाचार्यवचनं ब्रह्मनिर्गुणत्वादिनिंदापरं । अवज्ञायतिरस्कृत्य । विरोधिनिब्रह्मनिर्गुणत्वादौसत्वबुद्धिंयतःकुर्युरिति
तद्वाक्यार्थः । ननुमंत्रे विद्यारतानामधिकतमःप्राप्तिरुच्यते । तद्विरुद्धंप्रकृतासंगतंच । नचयउविद्यायांरताइत्यस्यनविद्यारत
त्वमात्रेतात्पर्यं । किंत्वन्यथाज्ञानानिंदनेपि । अतोनोक्तदोषद्वयावकाशः । अतएवभाष्येतेषामनिंदका इतितद्वाक्यमन्यथाव्या

ख्यातमितिचेत् सत्यं । तेनतदर्थालाभादित्यतोलाभप्रकारंदर्शयति ॥ उशब्दोवधारणार्थइत्यादि ॥ ननुतस्मादित्यादिभाष्यमाद्यमंत्रस्यव्याख्यान मुतविद्यांचाविद्यांचेतितृतीयमंत्रस्य । नाद्यः । पूर्वश्लोकेनैवसम्यग्व्याख्यातत्वात् । नद्वितीयः । तस्मादित्यंशवैयर्थ्यादित्यत आद्यंपक्षमंगीकृत्यपदव्याख्यानत्वाभावेपि मंत्रेऽनन्वयशंकायामध्याहृतसाध्येनान्वयप्रदर्शनार्थंतदित्यभिप्रेत्यसाध्याकांक्षामुत्थापयति ॥ ततःकिमिति ॥ यस्मादित्यध्याहृत्यपूर्वश्लोकार्धेनान्वयंदर्शयति ॥ यस्मान्मिथ्याज्ञानेति ॥ ननुभाष्येपि साध्यानुक्तेरनन्वयदोषस्तदवस्थः । ततःकिमित्यपेक्षायाअनिवृत्तिश्चेत्यतःसाध्यमध्याहरति ॥ विद्या

उशब्दोवधारणार्थः । विद्यायामित्यनेनसंबध्यते । तेनविद्यायांयथार्थज्ञानएवरताः नत्व न्यथाज्ञाननिंदांकुर्वंतीत्येषोर्थोलभ्यते। अतउक्तं तेषामनिंदकाइति॥ ततःकिमत्यतोवक्ति। तस्मादिति ॥ यस्मान्मिथ्याज्ञानतदनिंदाभ्यांतमःप्राप्तिः ॥ निंदांचविद्यादितिशेषः ॥

दितिशेषइति ॥ एतच्चयेविदुरितिभाष्ये यस्तद्वेदेतिमंत्रेचानुवादेनसूचितमितिबोध्यं । शेषपूरणंचनिंदांचेत्यतःपरमितिज्ञापनायतत्पदानुवादः । एवंसर्वत्रापिज्ञातव्यं । अत्रयस्मान्मिथ्याज्ञानेनतमःप्राप्तिस्तस्मान्नारायणमनामयंयथास्वरूपंविद्यात् । यस्मात्तदनिंदयातमःप्राप्तिस्तस्मादयथार्थस्यनिंदांचविद्यादितिप्रत्येकमन्वयोज्ञातव्यः । ननुनिंदांविद्यादित्ययुक्तं । निंद्यत्वज्ञानस्यविशिष्टफलहेतुत्वेपिनिंदाज्ञानस्यतदभावादित्यतोविषयिवाचकनिंदाशब्दस्यविषयेनिंद्येलक्षणां भावप्राधान्यंचांगीकृत्यानू ॥ ४५ ॥

भा० । तेषामनिंदकाः । तस्माद्यथास्वरूपंतुनारायणमनामयं ।

द्यव्याचष्टे ॥ अयथार्थस्यनिंदामितीति ॥ ज्ञानस्येत्युक्त्यादुर्ज्ञानस्याविनिंदकाइतिबृहद्भाष्यानुसारेणायथार्थप्रातिपदिकात्परं ज्ञानप्रातिपदिकस्याध्याहारइत्युक्तंभवति । अनेन येअविद्यामुपासते विष्णोरन्यथाकारस्यनिर्गुणत्वादेरुपासकाः तेअंधंतमःप्रविशंतियस्मात्तस्माद्यथास्वरूपंनारायणंविद्यादुपासीत येविद्यायामु विद्यायामेव यथार्थज्ञानएवरताः । सम्यगाचार्यवचनमवज्ञायायथार्थज्ञानस्यानिंदकाइतियावत् । ते ततः मिथ्याज्ञानिप्राप्यतमसःसकाशात्भूयःकिंचिदधिकं । तमःप्रविशंतीतिइ

अयथार्थस्यनिंदामिति ॥ अयथार्थज्ञानस्यनिंद्यत्वमित्यर्थः ॥९॥ किंविपक्षेअनर्थप्राप्तेरेवसम्यग्ज्ञानासम्यग्ज्ञाननिंदनयोःकर्तव्यता नेतिब्रूमः । किंतुमोक्षफलस्यांशतउभयसाध्यत्वादपीतिप्रतिपादकोन्यदेवाहुर्विद्ययेतिद्वितीयमंत्रः । तथाहि । विद्यया यथार्थज्ञानेना न्यदेव मोक्षैकदेशलक्षणंफलं प्राप्यमाहुर्वृद्धाः ।

वव्यक्तं प्रमितं । यस्मात्तस्मादयथार्थज्ञानस्यनिंद्यत्वंचविद्यात् । ततश्चनिंदाकार्येतिसाध्याध्याहारेणमंत्रयोजनासूचिताभवति। द्वितीयमंत्रार्थविवरणरूपतृतीयमंत्रव्याख्यानेनैवद्वितीयमंत्रस्यापिव्याख्यातत्वंमन्यमानेनभाष्यकृताअव्याख्यातंद्वितीयमंत्रंस्वयमवतार्यव्याचष्टे ॥ किंविपक्षेऽनर्थप्राप्तेरेवेत्यादिना ॥ सम्यग्ज्ञानासम्यग्ज्ञाननिंदनयोःकर्तव्यतेति ॥ अत्र सम्यग्ज्ञानस्यकर्तव्यत्वंनामसंपाद्यत्व मसम्यग्ज्ञाननिंदनस्यतुप्रसिद्धमेवेतिज्ञातव्यं । एवमवतार्यव्याख्यातुंप्रतिजानीते ॥ तथा

भा० । अयथार्थस्यनिंदांच ॥ ९।१० ॥

उप० । अन्यदेवाहुर्विद्ययाअन्यदाहुरविद्यया । इतिशुश्रुमधीराणांयेनस्तद्विचचक्षिरे ॥ १० ॥

हीति ॥ अन्यथाज्ञानवाचकाविद्याशब्दस्यतन्निंदायांजहल्लक्षणेत्याह ॥ अन्यथाज्ञाननिंदयाचेतियावदिति ॥ धियार मंतइतिव्युत्पत्तिमभिप्रेत्योक्तं धीराणांधीमतामिति ॥ वृद्धवचनसंमतियुक्तमिति ॥ अन्यदेवाहुरितिधीरवचनगताहुरित्य स्यास्मद्वृद्धाएवमाहुरित्यर्थकत्वादेवमुक्तमितिज्ञातव्यं ॥ ९-१० ॥ विवरणार्थइति ॥ अन्यदेवेतिसामान्येनोक्तस्यमृत्युंती

अविद्यया अन्यथाज्ञाननिंदयाचेतियावत् । अन्यदेवफलमाहुरिति धीराणां धीम तां । वृद्धवचनसंमतियुक्तंवचनंशुश्रुम । ये धीराः नोस्मभ्यंमोक्षसाधनंविचचक्षि रेव्याचचक्षिरे । तस्मादुपपन्नःसमुच्चयइति ॥ १० ॥ अस्यैवार्थस्यविवरणार्थोविद्यांचे तितृतीयोमंत्रः । तस्येदंव्याख्यानं येविदुरिति ॥ यथास्वरूपंत्वित्याद्युक्तावृत्त्यान्वयः ।

र्त्वाऽमृतमश्नुतइतिविस्पष्टमुक्तत्वाद्विवरणार्थइत्युक्तं । अतोनगतार्थतेतिभावः । ननुयेविदुरित्यारभ्यैवभाष्यस्यतृतीयमंत्रव्या ख्यानत्वे विद्यांचाविद्यांचेतिपदद्वयस्याव्याख्यातत्वप्रसंगः । भाष्येवेदनकर्मानुक्त्याऽनन्वयप्रसंगश्चेत्यतआह ॥ यथास्वरूपं त्वित्यादीति ॥ ननूक्तावृत्त्यान्वयांगीकारेपि मंत्रभाष्ययोर्विसंवादएव । मंत्रेविद्याविद्ययो र्भाष्येचेश्वरयाथात्म्यायथार्थज्ञान

उप० । विद्यांचाविद्यांचयस्तद्वेदोभयँसह ॥ अविद्ययामृत्युंतीर्त्वाविद्ययाऽमृतमश्नुते ॥ ११ ॥

भा० । येविदुःसहसज्जनाः ।

निंद्यत्वयोर्वेद्यत्वेनोक्तत्वादित्यतो मंत्रगतपदद्वयव्याख्यानत्वाद्भाष्यस्यनदोषइतिभावेन व्याख्यानतांघटयति ॥ तेनेति ॥ आवृत्तेनयथास्वरूपंचेत्यादिनेत्यर्थः । अत्राद्या विषयिवाचकस्यविषयेजहल्लक्षणा । द्वितीयातु धर्मिवाचकस्यधर्मे । उपलक्षणा चगौणीचेत्यादौलक्षणामात्रेप्युपलक्षणाशब्दप्रयोगादितिद्रष्टव्यं । यौगपद्यार्थत्वभ्रमनिरासायाह ॥ सहेत्येकपुरुषार्थेति ॥ निर्दुःखपरमानंदरूपैकपुरुषार्थेत्यर्थः । अयथार्थस्यनिंदया दुःखाज्ञानादिरूपिणश्चनिंदयेतिवा दुःखाज्ञानादिरूपिणस्तेइतिवा अन्वयभ्रमनिरासायविशेषणविशेष्यभावेनतत्प्रदर्शनपूर्वकं अयथार्थज्ञानस्यनिंद्यत्वप्रस्तावेप्ययथार्थस्यतदभावाद्भगवत्यसंभवा

तेनविद्यापदं ईश्वरयाथात्म्यस्याविद्यापदंचान्यथाज्ञाननिंद्यत्वस्योपलक्षणमित्युक्तंभवति ।

सहेत्येकपुरुषार्थहेतुत्वेनेत्यर्थः । दुःखाज्ञानादिरूपिणोऽयथार्थस्येति । तज्ज्ञानस्येत्यर्थः ।

च्चेतिशंकापरिहारायदुर्ज्ञानस्याविनिंदकाइतिबृहद्भाष्यानुसारेणायथार्थपदंतज्ज्ञानलक्षकतयाव्याचष्टे ॥ दुःखाज्ञानादीति ॥ दुःखाज्ञानादिरूपिणोऽयथार्थज्ञानस्येति कार्यकारणयोरभेदोपचारः । यद्वादुःखाज्ञानादिरूपयत्युत्पादयतीतिव्युत्पत्त्यातत्कार णस्येत्येवार्थः । सुखज्ञानादिरूपिणोयथार्थस्येत्यत्रतुसाक्षादभेदएव । यथार्थपदोदितेश्वरयाथात्म्यस्य सुखज्ञानादिव्यतिरेकेणा न्यस्याभावेनतदात्मकत्वादितिबोध्यं । ननुदुःखाज्ञानादिरूपिणइतिभाष्ये दुःखाज्ञानादि रूपंयस्येतिबहुव्रीहिणैवसत्वर्थलाभा

भा० । तेनिंदयाऽयथार्थस्यदुःखाज्ञानादिरूपिणः । दुःखाज्ञानादिसंतीर्णाःसुखज्ञानादिरूपिणः । यथार्थस्यपरिज्ञानात्सुखज्ञानादिरूप तां । यांति ॥ ११ ॥

दिनिप्रत्ययवैयर्थ्यमितिचेत् । बहुव्रीहिमाश्रित्यमतुबर्थप्रत्ययप्रयोगेवैयर्थ्येपि दुःखाज्ञानादिकंचतत्रूपंचदुःखाज्ञानादिरूपं त
दस्यास्तीतिदुःखाज्ञानादिरूपीतिकर्मधारयमाश्रित्यतत्प्रयोगेशब्दांतरत्वेनदोषाभावात् । नच नबहुव्रीहिनिर्वाह्येभवंतिमतुबाद
यइत्याद्युक्तिबलाद्बहुव्रीह्यंगीकारएवोचितो नकर्मधारयमत्वर्थीयांगीकारइतिवाच्यं । यतोस्त्यत्रव्यवस्था । यत्रकर्मधारयमत्व
र्थीयेबहुव्रीहौचशब्दसाम्यंतत्रकर्मधारयमत्वर्थीयएवांगीकार्योनबहुव्रीहिः । तस्यान्यपदार्थप्रधानकस्यकर्मधारयाज्जघन्यत्वेनवृ
थातदंगीकारस्यानुचितत्वात् । यत्रचकर्मधारयमत्वर्थीयात्बहुव्रीहौशब्दलाघवं तत्रबहुव्रीहिरेवांगीकार्योनकर्मधारयमत्वर्थीयः

अयथार्थज्ञाननिंदया मृत्युपदोदितदुःखादितरणंभवति ।
यथार्थज्ञानेनच सुखज्ञानादिरूपतालक्षणामृतप्राप्तिर्भवती

अल्पेनशब्देनाभिमतार्थप्रतिपादनसंभवे बहुयत्नाश्रयणस्यदोषत्वात् । यथोक्तं । कर्मधारयमत्वर्थीयाद्बहुव्रीहिरेवेष्टोलघुत्वा
दिति । संमतंचैतट्टीकाकारस्य । अतएवप्रमेयदीपिकायां । यद्विकारीत्यत्र कर्मधारयमत्वर्थीयमभ्युपगम्यानादिमदित्यत्रतदनं
गीकारः । एतच्चएकगोपूर्वाट्ठञ्नित्यमितिसूत्रेदुर्घटवृत्तिकृताप्रपंचितमनुसंधेयं । तस्माद्युक्तं दुःखाज्ञानादिरूपिणइत्यत्रकर्मधा
रयमत्वर्थीयाश्रयणमिति । मंत्रानुक्तविशेषणोपादानस्यप्रयोजनमाह ॥ अयथार्थज्ञानेत्यादि ॥ ननुमंत्रे मृत्यूत्तरणमुक्तं प्र
माणेतुदुःखादितरणं । अतोवैरूप्यमित्यतउक्तं मृत्युपदोदितेति । एवमेवसुखज्ञानादिलक्षणामृतप्राप्तिर्भवतीत्येतदपिव्याख्ये ॥ ४७ ॥

यं ॥ इत्येतदुपपादनायेति ॥ दुःखादितरणेदुःखादिरहितत्वेनभगवदुपासकत्वरूपोपपत्तेःसुखज्ञानादिरूपत्वेचसुखादिमत्त्वे
नभगवदुपासकत्वरूपोपपत्तेःसूचकत्वेनोपपादनायेत्यर्थः । कथमनेनविशेषणद्वयेनतत्सूचनमितिचेदित्थं । ज्ञानशब्दस्योपासना
पर्यंतत्वस्योक्तत्वादयथार्थज्ञानंनाम जीवाभिन्नत्वादिनाभगवदुपासनं । जीवस्यचदुःखादिमत्त्वात्तदेवदुःखादिमत्त्वेनभगवदुपा
सनमित्युच्यते । तस्यचदुःखाज्ञानादिरूपिणइत्यनेनदुःखाज्ञानादिसाधनत्वेननिंद्यत्वेऽभिहितेदुःखादिरहितत्वेनभगवदुपासन
स्यकर्तव्यत्वंलभ्यते । ततश्चदुःखादिरूपिणोऽयथार्थज्ञानस्यनिंदयादुःखादितरणंभवतीत्यनेनदुःखादिरहितत्वेनभगवदुपासक

त्येतदुपपादनाय दुःखाज्ञानादिरूपिणो अयथार्थस्य सुखज्ञानादिरूपिणोयथार्थस्ये
तिविशेषणोपादानंकृतं । तथाचश्रुतिः । तंयथायथोपासतेतदेवभवतीति ॥ ११ ॥

त्वात्दुःखादितरणंभवतीत्यर्थःसंपद्यते । एवंयथार्थस्यपरिज्ञानंनाम परमेश्वरयाथात्म्यस्योपासनं । तस्यचयाथात्म्यस्यसुखज्ञा
नादिरूपत्वेऽभिहिते सुखादिमत्त्वेनभगवदुपासकत्वंस्फुटंलभ्यते । तथाच सुखज्ञानादिरूपिणः । यथार्थस्यपरिज्ञानात्सुखज्ञाना
दिरूपतां ॥ यांतीत्यनेनसुखज्ञानादिमत्त्वेनभगवदुपासकत्वात्सुखज्ञानादिरूपतांयांतीत्यर्थःसंपद्यते । अतोयुक्तंतत्सूचकत्वं ।
अवश्यमेतदेवंव्याख्येयं । अन्यथा तंयथायथेतिश्रुत्युदाहरणासंगतिप्रसंगादितिध्येयं । दुःखाज्ञानादिरहितत्वेनतदुपासकस्यसु
खादिरूपताभवतीत्येतत्कुतइत्यतआह ॥ तथाचेति ॥ तामेवपठति ॥ तंयथेति ॥ तदेव तत्सदृशमेव भवतिप्राप्नुवंति । अ

न्यथोपासतइतिबहुवचनानुपपत्तेरेकवचनस्यभूप्राप्ताविति धातोःपरस्मैपदस्यचछांदसत्वात् । एतदभिप्रायेणैववैश्वानराधिकर णटीकायां तदेवभवतिप्राप्नुवंतीत्युक्तं । भाष्ये सुखज्ञानादिरूपतामिति । सुखज्ञानादिरूपताव्यक्तिमित्यर्थः । अतएवतद्व्यक्ति मात्रजेदितिवक्ष्यतीतिज्ञेयं ॥ भा० ॥ ११ ॥ ततश्चायंमंत्रार्थः ॥ विद्यां विद्याविषयीभूतमीश्वरयाथात्म्यं । अविद्यां अन्यथा ज्ञाननिंद्यत्वं । चशब्दावन्योन्यसमुच्चये । तदिदमुभयंयःसज्जनःसहनिर्दुःखानंदरूपैकपुरुषार्थसाधनत्वेनवेद जानाति उपास्ते

अन्यथाज्ञानमेवानर्थसाधनं यथार्थज्ञानमेवमोक्षसाधनमित्येतद्विवरणा र्थ मंधंतमःप्रविशंतीत्युत्तरमंत्रत्रयं । तत्राद्यमंत्रस्यार्थः । एवमिति ॥

इतियावत् । सः अविद्यया दुःखाज्ञानादिरूपिणोऽयथार्थज्ञानस्यनिंदया दुःखादिरहितत्वेनपरमेश्वरोपासनयेतियावत् । मृ त्युंदुःखादिकंतीर्त्वाविद्ययासुखज्ञानादिरूपिणःपरमेश्वरयाथात्म्यस्योपासनया अमृतत्वंसुखज्ञानादिरूपताव्यक्तिमश्नुतेप्राप्नोति। तंयथायथोपासतेतदेवभवतीतिश्रुतेरिति ॥ खं० ११ ॥ इत्येतद्विवरणार्थमिति ॥ असंभूतिमित्यनेनायथार्थज्ञानस्य संभू तिंचेत्यादिनायथार्थज्ञानस्यविवृतत्वादितिभावः । एवंशब्दस्यदार्ष्टांतिकार्थकस्यदृष्टांताकांक्षायां यथार्थस्यपरिज्ञानादितिसन्नि

उप० । अंधंतमःप्रविशंतियेऽसंभूतिमुपासते । ततोभूयइवतेतमोयउसंभूत्याꣳरताः ॥ १२ ॥

भा० । एवंसृष्टिकर्तृत्वंनांगीकुर्वतियेहरेः ।

हितप्रकृतयथार्थज्ञानिनांदृष्टांतत्वस्यविरुद्धत्वात्तेषामनिंदकाइतिव्यवहितोक्तंदृष्टांतमाह ॥ यथेति ॥ अत्रान्यथाज्ञानानिंदका नामधिकतमःप्राप्तेरुक्तत्वेपि तमःप्राप्तिमात्रेदृष्टांतत्वंज्ञातव्यं । तथासंहारकर्तृतां नांगीकुर्वंतीत्यस्य यउसंभूत्यांरताइत्येतद्व्या ख्यातत्वंघटयति ॥ अत्राप्युशब्दइत्यादि ॥ नकेवलंयउविद्यायामित्यत्रेत्यपेरर्थः । तेप्येवमित्यत्राप्येवंशब्दस्य यथान्यथा ज्ञानानिंदका एवमित्यर्थःप्रतीयतेऽतोनूद्यव्याचष्टे ॥ तेप्येवमिति ॥ अव्यवहितस्यदृष्टांतत्वसंभवेव्यवहितस्यतदंगीकारोनु

यथाऽन्यथोपासकाःअन्यथाज्ञानानिंदकाइत्यर्थः । असंभूतिंजगत्स्रष्टेरकर्तारमित्यस्यतात्पर्यं स्रष्टी ति॥अत्राप्युशब्दोवधारणार्थः। संभूत्यामित्यनेनसंबध्यते तेनसंभूत्यांउजगत्स्रष्टृत्वएव। जगत्स्रष्टैव विष्णुः नतुसंहारकर्तेत्यस्मिन्नर्थेरताइत्येषोर्थोलभ्यते । तस्मादुक्तंतथेति॥ तेप्येवंस्रष्टिकर्तृत्वानंगीका रिणइवतमोयांतीत्यर्थः । ततःकिमित्यतआह । तस्मादिति॥यस्मादेवंस्रष्टिकर्तृत्वानंगीकारेऽनर्थः ।

चितइतिभावः । अत्रतमःप्राप्तिमात्रेदृष्टांतदार्ष्टांतिकभावोज्ञातव्यः । अन्यथा संहारकर्तृत्वानंगीकारिणांभूयःशब्देनाधिकत मःप्राप्तेरुक्तत्वेनवैषम्यापातादितिद्रष्टव्यं । ननुसृष्टिकर्तृत्वानंगीकारिप्राप्यतमसःसकाशात्संहारकर्तृत्वानंगीकारिप्राप्यतमसोभूय इवेतिमंत्रेआधिक्यमुक्तं । तदयुक्तं । आधिक्यप्रापकदोषाधिक्याभावादितिचेदस्त्येवदोषाधिक्यं । तथाहि । सृष्टिकर्तृत्वानं गीकारिणः सम्यगाचार्योपदेशाभावेनाप्राप्तत्यागित्वात् । सृष्टिकर्तृत्वमंगीकृत्यसंहारकर्तृत्वानंगीकारिणस्तु सृष्टिकर्तृत्वांगीका

भा० । तेपियांतितमोघोरंतथासंहारकर्तृतां। नांगीकुर्वंतितेप्येवंतस्मात्सर्वगुणात्मकं। सर्वकर्तारमीशेशंसर्वसंहारकारकं ॥ १२ ॥ १३ ॥

रायसम्यगाचार्योपदेशस्य तन्मूलभूत यतोवेत्यादिवेदवाक्यानुसरणस्यचावश्यकत्वेनताभ्यामेवसंहारकर्तृत्वस्यापिप्राह्यातत्त्यागिनःप्राप्तनिष्ठाहीनत्वात् । अप्राप्तत्यागिनःप्राप्तनिष्ठाहीनस्याधिकदोषवत्तायाःपूर्वोदाहृतप्रमाणसिद्धत्वात् । अतःसंहारकर्तृत्वानंगीकारिणोयुक्ताऽधिकतमःप्राप्तिरिति।साध्यानुक्तेस्ततःकिमितिशंकायाअपरिहारइत्यतआह ॥ विद्यादितिवाक्यशेषइति॥ अन्यथा योवेदेत्यनुवादानुपपत्तेरितिभावः । सर्वसंहारकारकमितिवाक्यांतेशेषोवाक्यशेषः । यत्रक्काप्यन्वयभ्रांतिपरिहाराय वाक्यशेषइत्युक्तं । अनेन मंत्रेऽनन्वयशंकायांयस्मात्तस्मादित्यध्याहारेणान्वयोज्ञातव्यइत्युक्तंभवति । ननुमंत्रेसर्वगुणात्मकत्वाज्ञानेऽनर्थानुक्तेस्तस्मात्सर्वगुणात्मकंविद्यादितिसाध्यकथनमसंगतमित्यतआह ॥ सृष्टीति ॥ सर्वगुणात्मकमित्युक्तमिति॥

विद्यादितिवाक्यशेषः । सृष्टिकर्तृत्वानंगीकारेऽनर्थकथनमुपलक्षणार्थमितिज्ञापयितुंस
र्वगुणात्मकमित्युक्तं । एतदप्युपलक्षणं । उपसंहारेधिकस्यापिवक्ष्यमाणत्वात् ॥ १२॥

अत्रसर्वगुणात्मकमित्यतःपरमीशेशमितिशेषः । अन्यथातद्विशेषणवैयर्थ्यप्रसंगात् । यद्वा तस्यविशेष्यसमर्पकत्वादनुपादानमितिज्ञातव्यं ॥ एतदप्युपलक्षणमिति ॥ सर्वगुणात्मकमित्येतदपिसर्वदोषविनिर्मुक्तत्वादेरुपलक्षणमित्यर्थः । कुतइत्यतआह ॥ उपसंहारइति ॥ सर्वदोषविनिर्मुक्तमित्याद्युपसंहारग्रंथेसर्वदोषविनिर्मुक्तत्वादेरधिकस्यवक्ष्यमाणत्वादित्यर्थः ॥ भा० ॥ १२॥ ॥ ४९ ॥
ततश्चायंमंत्रार्थः ॥ येपरमेश्वरमसंभूतिंजगत्सृष्टेरकर्तारमुपासते तेअंधयतीत्यंधंतमःप्रविशंति । येचसंभूत्यामु जगत्स्रष्टृत्वएव । जगत्स्रष्टैवविष्णुर्नतुसंहारकर्तेत्यस्मिन्नर्थेरताः उपलक्षणमेतत् । परमेश्वरस्यसर्वगुणात्मकत्वसर्वदोषविनिर्मुक्तत्वादिकंनां

गीकुर्वंति । तेपि ततः सृष्टिकर्तृत्वानंगीकर्तृप्राप्यतमसःसकाशात् भूयःकिंचिदधिकंतमःप्रविशंतीत्येतदिवव्यक्तमसंदिग्धमितियावत् । यद्वात्रेवशब्दस्यैवाल्पार्थत्वांगीकारेणभूयइवकिंचिदधिकमितिव्याख्येयं । यस्मादेवंसृष्टिसंहारकर्तृत्वसर्वगुणात्मकत्वाद्यनंगीकारेऽनर्थः तस्मात्परमेश्वरंस्रष्टृत्वाद्युपेतंविद्यादुपासीतेति ॥ खं० ॥ १२ ॥ द्वितीयमंत्रविवरणरूपतृतीयमंत्रव्याख्यानेनैवद्वितीयस्यापिव्याख्याततांमन्यमानेनभाष्यकारेणाव्याख्यातंद्वितीयमंत्रंस्वयंससंगतिकंव्याचष्टे ॥ किंविपक्षइत्यादि ॥

किंविपक्षेबाधकसद्भावादेवैतज्ज्ञातव्यं । नेतिब्रूमः । किंतु मोक्षोपयोगित्वादपीतिप्रतिपादयितुम
न्यदेवाहुःसंभवादितिद्वितीयोमंत्रः । तत्रसंभवात्सृष्टिकर्तृत्वज्ञानाद संभवात्संभवविपरीतसं
हारकर्तृत्वज्ञानादित्यर्थः ॥ १३ ॥ तस्यैवविवरणार्थःसंभूतिंचेतितृतीयोमंत्रः । तस्यार्थो योवेदेति॥

एतादिति ॥ सृष्टिसंहारकर्तृत्वमित्यर्थः ॥ मोक्षोपयोगित्वादपीति ॥ मोक्षफलस्यांशतउभयसाध्यत्वादपीत्यर्थः ॥ सृष्टिकर्तृत्वज्ञानादिति ॥ अनेनसंभवत्यनेनेतिसंभवःसृष्टिकर्ता । भावप्रधानोनिर्देशः । विषयवाचकस्यविषयिणिज्ञानेलक्षणेत्युक्तंभवति । नञोऽभावार्थत्वभ्रमनिरासायविरुद्धार्थत्वमंगीकृत्यासंभवादितिपदंव्याचष्टे ॥ संभवविपरीतेति ॥ इतिशुश्रुमधी

---

उप० । अन्यदेवाहुःसंभवादन्यदाहुरसंभवात् । इतिशुश्रुमधीराणांयेनस्तद्विचचक्षिरे ॥ १३ ॥ संभूतिंचविनाशंचयस्तद्वेदोभय सह । विनाशेनमृत्युंतीर्त्वासंभूत्याऽमृतमश्नुते ॥ १४ ॥

राणामित्युत्तरार्धस्यप्रागेवव्याख्यातत्वादत्रनव्याख्यानंकृतं ॥ १३ ॥ योवेदेत्यत्रवेदनकर्मानुक्तेराह ॥ पूर्वावृत्त्येति ॥ सर्वगु णात्मकमित्याद्यावृत्त्येत्यर्थः । यः सर्वसंहारकारकंभगवंतंवेद सःसंहृतिज्ञानेनबंधाद्विमुच्यतेइत्यसंगतिः । भगवज्ज्ञानस्यबंधमो चकत्वेपिसंहृतिज्ञानस्यतदभावाद्विरोधश्चेत्यतःसुखज्ञानादीत्युत्तरभाष्यानुसारेणव्याचष्टे ॥ संहृतीति ॥ ननुमंत्रेमृत्युंतीर्त्वेति मृत्यूत्तरणंफलमुक्तं । भाष्येतुदेहबंधमोचनमतोवैरूप्यमित्यतोव्याख्यानव्याख्येयभावंघटयति ॥ देहसंबंधस्येति ॥ तद्धेतु त्वादितिवदता मृत्युशब्दस्यदेहबंधेलक्षणा कार्यकारणभावःशक्यसंबंधइत्युक्तंभवति । ननुसंभूत्येतिमंत्रे सर्वकर्तारमितिपूर्वभा

पूर्ववदावृत्त्यैवान्वयः । संहृतिज्ञानादिति ॥ तत्कर्तृत्वज्ञानादित्यर्थः । देह संबंधस्यमृत्युत्वंतद्धेतुत्वाज्ज्ञातव्यं । सुखज्ञानादीतिपूर्ववद्युक्तिसूचनार्थं ।

ष्येचा विशेषणसर्वकर्तृत्वस्यप्रकृतत्वादत्रसुखज्ञानादीतिविशिष्योक्तिर्व्यर्थेत्यतआह ॥ सुखेति ॥ पूर्ववदिति ॥ पूर्वभाष्येसु खज्ञानादिरूपिणइतिविशेषणमिवेत्यर्थः ॥ युक्तिसूचनार्थमिति ॥ अधिकारिणःसुखज्ञानादि व्यक्तिमत्त्वेसुखज्ञानादिकर्तृत्वे नभगवदुपासकत्वरूपयुक्तिसूचनार्थमित्यर्थः ॥ यद्यप्यत्रसंभूतिंचविनाशंचेत्यादिपूर्वमंत्रानुसारेणसुखज्ञानादिकर्तृत्वेत्याद्युक्त्वा ऽनंतरंसंहृतिज्ञानादिकंवक्तव्यं । नच विनाशेनमृत्युंतीर्त्वेत्युत्तरार्धानुसारेणभाष्यप्रवृत्तेर्नदोषइतिवाच्यं । उत्तरार्धेपिपूर्वक्रमोल्लं घनेनिमित्ताभावात् । तथापिमुक्तिर्हित्वान्यथारूपंस्वरूपेणव्यवस्थितिरित्यादिप्रमाणानुसारेणविशिष्टरूपेपिमोक्षेसंसारनिवृत्तेः ॥ ५० ॥

भा० । योवेदसंहृतिज्ञानाद्देहबन्धाद्विमुच्यते । सुखज्ञानादिकर्तृत्वज्ञानात्तद्व्यक्तिमाप्नुयात् ।

पूर्वभावित्वात्फलानुसारेणोत्तरार्धेक्रमोल्लंघनं । तदनुसारेणप्रवृत्तत्वाद्भाष्यस्यनतत्रापिकश्चिद्दोषः ॥ ततश्चायंमंत्रार्थः ॥ संभूतिंसुखज्ञानादिसर्वकर्तृत्वं विनाशंविनाशकर्तृत्वं सर्वसंहारकत्वमितियावत् । चशब्दावन्योन्यसमुच्चये । तदिदमुभयं योधिकारी सहएकपुरुषार्थसाधनत्वेनवेदउपास्ते सःविनाशेन परमेश्वरस्यविनाशकर्तृत्वोपासनेन मृत्युं मृत्युकारणदेहादिबंधंतीर्त्वा संभूत्यासुखज्ञानादिकर्तृत्वोपासनेना मृतंसुखज्ञानादिव्यक्तिमश्नुतेप्राप्नोति । तंयथायथोपासतइतिश्रुतेरिति । ननूपसंहारज्ञापकाभावादुपसंहरतीत्यनुपपन्नमित्यतआह ॥ तस्मादिति ॥ भाष्ये नगुणानांचभागहानिमिति ज्ञानानंदादिगुणानांमध्ये ज्ञाने

मंत्रार्थमुपसंहरति। सर्वेति॥ तस्मादितिवक्ष्यमाणमादौयोज्यं।

हरेःसाम्यंनचिंतयेदितिवक्ष्यमाणेनान्वयः । विष्णोरभिन्नतां

च्छाद्यंगीकृत्य आनंदाद्यनंगीकारेणहानिंनैवप्रकल्पयेदित्यर्थः ॥ वक्ष्यमाणमिति ॥ नैवप्रचिंतयेत्तस्मादित्यत्रवक्ष्यमाणं तस्मादितिपदं सर्वदोषविनिर्मुक्तमित्यस्यादौयोज्यमित्यर्थः ॥ हरेःसाम्यंनेति ॥ हरेःसाम्यंनेत्यस्यचिंतयेदितिवक्ष्यमाणेनान्वयइत्यर्थः । नमुक्तानामितिनञःसंबंधप्रदर्शनाय हरेःसाम्यंनेत्यनुवादःकृतः । क्वचिद्धरेःसाम्यांचिंतयेदितिवक्ष्यमाणेनान्वयइतिपाठोदृश्यते । तत्रसाम्यमित्यस्यचिंतयेदितिवक्ष्यमाणेनान्वयइत्यर्थः । नेत्यस्यपूर्ववदेवसंबंधोज्ञातव्यः । मुक्तानामित्यस्यपू

---

भा० । सर्वदोषविनिर्मुक्तंगुणरूपंजनार्दनं । जानीयान्नगुणानांचभागहानिंप्रकल्पयेत् । नमुक्तानामपिहरेःसाम्यंविष्णोरभिन्नतां । नवैप्रचिन्तयेत्तस्माद्ब्रह्मादेस्साम्यमेववा ।

र्वत्रान्वितत्वादभेदस्यचप्रतिसंबंधिसापेक्षत्वादाह ॥ मुक्तानामित्यनुवर्ततइति ॥ ननुसाम्यमेवेत्यवधारणंविरुद्धं । ब्रह्मादेः साम्यमेवनचिंतयेत् । अभिन्नतांतुचिंतयेदित्यर्थप्रतीतेरित्यतो नावधारणार्थत्वमेवशब्दस्य येनोक्तदोषः । किंतुकैमुत्यार्थत्वमित्याह ॥ साम्यमेवकिमुताभिन्नतामिति ॥ नचिंतयेदित्यनुकर्षस्यवक्ष्यमाणत्वात्साम्यमेवेतियथाश्रुतानुवादः । साम्यमेवन किमुताभिन्नतामितिपाठस्तु वक्ष्यमाणानुकर्षसिद्धवत्कारेणेतिद्रष्टव्यं । ननु नमुक्तानामित्यनेनैवब्रह्मादिसाम्यस्यनिषिद्धत्वात्पुनरुक्तिदोषइत्यतउक्त ममुक्तवर्गस्येति ॥ ननुभाष्येसाम्यमेवेत्यस्यान्वयाभावः । विकल्पाप्रसक्ते वाशब्दवैयर्थ्यंचेत्यतआह ॥

मुक्तानामित्यनुवर्तते । ब्रह्मादेरमुक्तवर्गस्यसाम्यमेव । किमुताभिन्नतां । वाशब्दोनचिंतयेदित्यस्यानुकर्षणार्थः । मानुषादीत्यत्र जानीयादित्यनुवर्तते । ततोमुक्तामुक्तगणा

वाशब्दइति ॥ साम्यमेवनेतिपाठेतु ननुसाम्यमेवनेत्यनुवादोनयुक्तः । नञोऽश्रवणात् । वाशब्दवैयर्थ्यंचेत्यतआह ॥ वाशब्दइतीत्यवतारणीयं । अव्ययानामनेकार्थत्वादितिभावः । नैवप्रचिंतयेदित्यन्वयभ्रमनिरासायाह ॥ मानुषादीत्यत्रेति ॥ विमुक्तिगं मानुषादिविरिंचांततारतम्यमित्यत्र विष्णोःपरोत्कर्षमित्यत्रचेत्यर्थः । यद्यपिसन्निहितत्वात्प्रचिंतयेदित्यनुवर्ततइति वक्तव्यं । तथापितस्यनञ्संबद्धत्वेनैवपूर्वत्रान्वितत्वान्नञ्परित्यागेनकेवलस्यानुवृत्तेरनन्यगतिकत्वाज्जानीयादित्यनुवर्ततइत्यु

भा० । मानुषादिविरिंचांततारतम्यंविमुक्तिगं । ततोविष्णोःपरोत्कर्ष



क्तं । ननु विष्णोःपरोत्कर्षंजानीयादित्यंतेनैवोपसंहारसिद्धेः सम्यग्ज्ञात्वाविमुच्यतइतिव्यर्थमित्यतआह ॥ तस्मादितिपरामृष्टमिति ॥ अनेनयस्मात्परमेश्वरंसम्यग्ज्ञात्वाविमुच्यतेतस्मात्सर्वदोषविनिर्मुक्तमित्यादिप्रकारेणजानीयादित्यर्थइत्युक्तंभवति । ननुमंत्राणामुक्तार्थस्थापनायावश्यकरणीयस्यापव्याख्याननिराकरणस्यभाष्ये अकरणात्न्यूनतेत्यतस्तांपरिहरिष्यन्ज्ञानकर्मसमुच्चयवादिनामपव्याख्यानमनुवदति ॥ केचिदिति ॥ केचिज्ज्ञानकर्मणोःसमुच्चयस्यप्रतिपादकमाद्यंमंत्रत्रयंइतिमन्यंत इत्यन्वयः । किंमायावादिवत्स्वर्गादिसाधनत्वेनेत्यतउक्तं ॥ मोक्षइति ॥ तादर्थ्येसप्तमी । मोक्षार्थंमोक्षसाधनत्वेनेतियावत् ।

तस्मादितिपरामृष्टंहेतुंदर्शयति॥ सम्यगिति ॥ केचिदविद्यापदंकर्मवाचकंमत्वैकैकनिंदयामोक्षेज्ञानकर्मणोःसमुच्चयस्यप्रतिपादकमाद्यमंत्रत्रयमितिमन्यंते । अन्येतुविद्यापदंदेवताज्ञानस्यवाचकंमत्वास्वर्गादौतस्यकर्मणासमुच्चयंप्रतिपादयतीदमित्याचक्षते ।

एवंस्वर्गादावित्येतदपिव्याख्येयं । नन्वाद्यमंत्रेसमुच्चयस्यसाधनत्वप्रतिपादकपदाभावात्कथंतत्प्रतीतिरित्यत आर्थिकप्रतीत्यंगीकारान्नदोषइत्याशयेनोक्तमेकैकनिंदयेति । नन्वर्थादपिनज्ञानकर्मसमुच्चयसिद्धिः । अविद्यामात्रस्य विद्यामात्रस्यच निंदितत्वेनाविद्याज्ञानसमुच्चयस्यैवसिद्धेरित्यतउक्त मविद्यापदंकर्मवाचकंमत्वेति ॥ अधुनामायावादिनामपव्याख्यानमनुवदति ॥ अन्येत्विति ॥ विद्यापदमिति ॥ अविद्यापदंकर्मवाचकंमत्वेतिपूर्वन्यायेनसिद्धत्वान्नोक्तं । किंतार्किकादिवन्मोक्षसाधनत्वेनेत्य

भा० । सम्यग्ज्ञात्वाविमुच्यतइतिकौर्मे ॥ १४ ॥

तउक्तं स्वर्गादाविति ॥ इदमिति ॥ आद्यंमंत्रत्रयमित्यर्थः ॥ उत्तरंत्विति ॥ अंधंतमःप्रविशंतियेसंभूतिमुपासतइत्याद्युत्तर मंत्रत्रयंतु सत्यलोकादिप्राप्तौ प्राप्त्यर्थं । तदुपासनयोः हिरण्यगर्भप्रकृत्युपासनयोः । समुच्चयस्यप्रतिपादकमितिप्रतिपन्नाइति संबंधः । हिरण्यगर्भप्रकृतिवाचकपदाभावात्कथमेतदित्यतउक्तं संभूत्यसंभूतिपदयोरित्यादि । यथोक्तंपरेण । अधुनाव्याकृता व्याकृतोपासनयोःस्वर्गादौसमुच्चिचीर्षयाप्रत्येकंनिंदाक्रियतइत्यादि । एवमनूदितंव्याख्यानद्वयंनिराकर्तुंप्रतिजानीते ॥ तदेत दिति ॥ पुराणवाक्येनैवेति ॥ अतो नभाष्यकारस्यापव्याख्याननिराकरणाभावप्रयुक्तान्यूनतेतिभावः । उभयसाधारणं

उत्तरंतुमंत्रत्रयंसंभूत्यसंभूतिपदयोरुत्पत्त्यनुत्पत्तिमत्परत्वेनहिरण्यगर्भप्रकृतिवाचकत्वंगृ हीत्वातदुपासनयोःसत्यलोकादिप्राप्तौसमुच्चयस्यप्रतिपादकमितिप्रतिपन्नाः ॥ तदेतदप व्याख्यानं । पुराणवाक्येनैवान्यथाव्याख्यातत्वात् । नान्यःपंथेत्यादिश्रुतिविरुद्धश्चसमुच्च यपक्षः । केवलकर्मिणोप्यधिकःकेवलज्ञानिनःसंसारइतिचकामकारेणचैकेइत्यादिविरुद्धं ।

दोषमुक्त्वा समुच्चयवादिनामसाधारणंदोषमाह ॥ नान्यःपंथेत्यादीति ॥ अयनायमोक्षायज्ञानान्यःपंथाःकर्मादिर्नविद्यतइ तिकर्मणोमोक्षसाधनतायानिषिद्धत्वात्कर्मसमुच्चयपक्षःश्रुतिविरुद्धइत्यर्थः । समुच्चयपक्षेप्रधानप्रमेयानुपपत्तिमभिधाय ततोभू यइवतेतमोयउविद्यायांरताइतिवाक्यार्थानुपपत्तिमप्याह ॥ केवलकर्मिणइति ॥ एवंहिपरेणव्याख्यातं । येऽविद्यांकर्मोपा सते तेअंधंतमःसुखदुःखपुण्यपापात्मकंसंसारंप्रविशंति । येविद्यायामेव ज्ञानएव रतास्तेततः केवलकर्मिंप्राप्यसंसाराद्भूयोधि

कंतमःसंसारंप्राप्नुवंतीति । तदेतद्व्याख्यानं कामकारेणचैकइत्यादिसूत्रेण तद्गृहीतया कामचाराःकामभक्षाःकामवादाःकामेनैवे मंदेहमुत्सृज्याथपरात्परमीयुरनारंभणमितिश्रुत्याचविरुद्धं । तत्रकेवलज्ञानिनःसंसारनिवृत्तेरुक्तत्वेनाधिकसंसारस्यदूरापास्तत्वात् । मायावादिपक्षेप्यसाधारणंदोषमाह ॥ आत्मज्ञानेति ॥ अत्रा स्यामुपनिषदि ॥ निर्णीतत्वादिति ॥ अत्राद्येनमंत्रेणसर्वैषणापरित्यागेनात्मज्ञाननिष्ठतोक्तेत्यादिनाग्रंथेनपरेणनिर्णीतत्वादित्यर्थः । यद्वाभाष्यकारेणनिर्णीतत्वादित्यर्थः । सर्वेषामपि मंत्राणांप्रमाणेनभगवत्परतयाव्याख्यानेनात्मज्ञाननिष्ठायाःनिर्णीतत्वलाभात् । आत्मज्ञाननिष्ठायामुपक्रमादिकमपियथायथंज्ञा

आत्मज्ञाननिष्ठायाएवात्रोपक्रमादिभिर्निर्णीतत्वा द्देवताज्ञानकर्मणोःसमुच्चयश्चनप्रकरणानुगुणः । कुर्वन्नेवेतिमंत्रस्यापिनिवृत्तकर्मविषयतयाव्याख्यातत्वात् । संभूतिंचविनाशंचेत्यत्रकुतोयंविनाश आपतितइतिचिंत्यं । विनाशधर्मकत्वाद्विनाशोहिरण्यगर्भइतिचेन्न । संभूतिपदेनपौनरुक्त्यात् ।

तव्यं । ननुदेवताज्ञानस्यप्रकरणाननुगुणत्वेपि नकाम्यकर्मणःप्रकरणाननुगुणत्वं । कुर्वन्नेवेतिमंत्रेतस्यप्रकृतत्वादित्यतआह ॥ कुर्वन्नेवेतिमंत्रस्यापीति ॥ दूषणांतरमाह ॥ संभूतिंचेति ॥ कुतःकस्मादापतितइत्यत्यंतासंगतिज्ञापनायपरिहासः । अस्मत्पक्षेआद्यमंत्रेसंभूत्यामेवेत्यवधारणेनद्वितीयमंत्रेअसंभवशब्देनप्रकृतस्यसंहर्तृत्वस्यात्रमंत्रेविनाशशब्देनानुवादसंभवेपिपरेण मंत्रत्रयस्यहिरण्यगर्भप्रकृतिपरत्वांगीकारेणात्रतदुभयग्रहणायसंभूतिंचासंभूतिंचेतिवक्तव्यत्वेपि विनाशंचेतिवचनमत्यंतासंगत

ईशा० ८४ मित्यर्थः । विनाशग्रहणस्यप्रकृतोपयोगमाशंकते ॥ विनाशधर्मकत्वादिति ॥ इदंचलक्षणाबीजशक्यसंबंधप्रदर्शनायोक्तं ॥

अव्याकृतोक्तीति ॥ प्रकृत्युक्तीत्यर्थः । नन्वसंभूतिशब्देनाव्याकृताकाशग्रहणान्नाव्याकृतोक्त्यभावो नापिपौनरुक्त्यं । न चासंभूतिशब्दाश्रवणंदोषः । असंभूतिशब्दगताकारलोपेसंभूतिशब्दस्यैवासंभूतिशब्दत्वादित्यतआह ॥ अकारलोपेनेति ॥ यथोक्तंपरेण । संभूतिंचविनाशंचेत्यत्रावर्णलोपेननिर्देशोद्रष्टव्यइति ॥ व्याकरणकौशलमिति ॥ व्याकरणस्यव्याख्यानस्य कौशलमपूर्वमितिवा । व्याकरणशास्त्रेकौशलमपूर्वमितिवापरिहासः ॥ १४ ॥ ननुहिरण्मयेनेत्यादिमंत्रस्यैवव्यर्थत्वात्तद्व्याख्या नपरंभाष्यंसुतरामनर्थकमित्यत उक्तार्थानुवादेनसंगतिकथनपूर्वकमुत्तरमंत्रसंदर्भप्रतिपाद्यमाह ॥ एवमित्यादिना ॥ अती

अव्याकृतोक्त्यभावाच्च । अकारलोपेनसंभूतिरव्याकृतमित्यपूर्वंव्याकरणकौशलमित्यास्तां॥१४॥एवं प्राप्ताधिकारंशिष्यंप्रतिपरमात्मस्वरूपंनिरूप्यतत्साक्षात्कारोमोक्षसाधनमित्यतीतग्रंथेनोक्तं। सचे श्वरसाक्षात्कारोनश्रवणादिमात्रेणभवति। नापिमोक्षःसाक्षात्कारमात्रेण। किंतुभगवत्प्रसादादेवे त्यतोऽनुष्ठितश्रवणादिकेनापिसाक्षात्कारार्थंप्राप्तसाक्षात्कारेणापिचमोक्षार्थंयथाभगवत्प्रार्थनंकार्यं

तद्ग्रंथेनोक्तमिति ॥ यस्तुसर्वाणिभूतान्यात्मन्येवानुपश्यतीत्याद्यतीतग्रंथेनेत्यर्थः ॥ नश्रवणादिमात्रेणेति ॥ अव्यक्तस्व भावस्यभगवतःप्रयत्नशतेनापिसाक्षात्कर्तुमशक्यत्वस्य अपिसंराधनेप्रत्यक्षानुमानाभ्यामित्यादावुक्तत्वादितिभावः ॥ नापिमो क्षइति ॥ राजादिसाक्षात्कारमात्रेणनिगडमोक्षादर्शनादितिभावः । तर्हिसाक्षात्कारशास्त्रस्यमोक्षशास्त्रस्यचाप्रामाण्यंस्यादित्या शयेनशंकते ॥ किंत्विति ॥ उत्तरमाह ॥ भगवदिति ॥ अतोऽनंतेनतथाहिलिंगमित्यादौ प्रसादस्यसाक्षात्कारसाधनतायाः ततोह्यस्यबंधविपर्ययौ भवपाशाच्चमोचकः यस्यप्रसादा दित्यादौप्रसादस्यमोक्षसाधनतायाश्चप्रमितत्वादितिभावः ॥ उत्तरो ग्रंथइति ॥ अग्नेनयेत्यनेनमोक्षार्थंप्रार्थनमितरेणसाक्षात्कारार्थमितिविवेकोद्रष्टव्यः ॥ तत्रेति ॥ मंत्रस्यावश्यकत्वेसिद्धइत्यर्थः ॥ एकर्षिप्रभृतिशब्दाभिधेयमिति ॥ यद्यपिपूषन्नित्यादिशब्दाभिधेयमितिवक्तव्यं । मंत्रेतस्यैवादित्वात् । परेणापिजगतः पोषणात्पूषारविरित्युक्तत्वाच्च । तथापि तस्यादित्यवाचकतायाःप्रसिद्धत्वादनुपादानं । यद्वापूषञ्छब्दस्यादित्येप्रसिद्धत्वेनकथं

तत्प्रकारप्रदर्शनार्थोहिरण्मयेनपात्रेणेत्याद्युत्तरोग्रंथः । तत्रसगुणब्रह्मप्राप्त्यर्थमेकर्षिप्रभृ तिशब्दाभिधेयमादित्यंप्रति मार्गयाचनमनेनक्रियतइत्याद्यन्यथाप्रतीतिनिरासाय तद्व्या ख्यानरूपांस्मृतिंतावदुदाहरति ॥ पात्रमिति ॥ सत्यस्येत्यनूद्यविष्णोरितिव्याख्यातं ।

चित्तच्छब्दाभिधेयत्वसंभवेप्येकर्ष्यादिशब्दाभिधेयत्वमादित्यस्याप्रामाणिकमितिदूषणसूचनायातदादित्वेनग्रहणंकृतमितिद्रष्ट व्यं ॥ इत्याद्यन्यथाप्रतीतीति ॥ मंत्रप्रतिपाद्यान्यथाप्रतीतिरियं । आदिशब्देनमंत्रगतसत्यादिपदार्थान्यथाप्रतीतिर्ग्राह्या । स्ववचनेनापिव्याख्यास्यमानत्वात्तावदित्युक्तं । विष्णुविशेषणत्वप्रतीतिनिरासायाह ॥ सत्यस्येत्यनूद्येति ॥ अनेनसत्यस्या

उप० । हिरण्मयेनपात्रेणसत्यस्यापिहितंमुखं । तत्त्वंपूषन्नपावृणुसत्यधर्मायदृष्टये ॥ १५ ॥

भा० । पात्रंहिरण्मयंसूर्यमंडलंसमुदाहृतं । विष्णोःसत्यस्यतेनैवसर्वदाऽपिहितंमुखं । तत्तपूर्णत्वतःपूषाविष्णुर्दर्शयतिस्वयं । सत्यधर्मा यभक्ताय ॥ १५ ॥

दित्यमंडलस्येतिव्याख्यानंनिरस्तंभवति । मुखमात्रस्यापिहितत्वानुपपत्तेर्यत्तेरूपंकल्याणतममित्युत्तरग्रंथानुरोधाच्चाह ॥ सम स्तविग्रहोपलक्षणमिति ॥ अनेनमुखंद्वारमितिव्याख्यानमपाकृतंवेदितव्यं । अत्रसूर्यमंडलेसाक्षात्कारयोग्यानांतदमुख्य मावरणं । मुख्यंत्वविद्यादिकमेव । अतएव तत्वंपूषन्नपावृण्वित्यनेनसूर्यमंडलाख्यावरणापगमंप्रार्थयित्वा व्यूहरश्मीन् समूह तेजइतिस्वरूपज्ञानादिविस्तारप्रार्थनेनाविद्याद्यावरणापगमप्रार्थनमुपपद्यते । अन्यथातस्यव्यर्थत्वात् । अतएवचोत्तरटीकायांर

मुखमितिसमस्तविग्रहोपलक्षणं । यद्यपिमंत्रेऽपावृण्वितिप्रार्थनं । अत्रतुदर्श यतीतिस्वरूपकथनं । तथापिमंत्रतात्पर्यमात्रोक्तिरियमितिनदोषः । पुषपुष्टा वित्यतःपूर्णत्वेनपूषेत्युक्तं । सत्यधर्मायेत्यनूद्यभक्तायेतिव्याख्यानं ॥ १५ ॥ ए कशब्दस्यप्रधानवाचकत्वादृषज्ञानइत्यतश्चप्रधानज्ञानरूपत्वतएकर्षिरित्युक्तं ।

श्मितेजःशब्दौस्वरूपज्ञानादिपरत्वेनव्याख्यातौ । सूर्यमंडलस्यैवावरणत्वेतुतद्व्याख्यानंविरुध्येतेति । पूर्णत्वलाभायधातुसूत्रंप ठति ॥ पुषपुष्टाविति ॥ पुषपुष्टावित्यतःकनिन्प्रत्ययेकित्वाद्गुणाभावेनिर्वचनत्वेनधातोर्दैर्घ्येपूषन्नितिभवति । अनेनजग तःपोषणात्पूषेतिव्याख्यानमपास्तं।भक्तविशेषणत्वभ्रांतिंपरिहरति॥सत्यधर्मायेत्यनूद्येति ॥१५॥ प्रधानज्ञानरूपत्वतइति॥



उप० । पूषन्नेकर्षेयमसूर्यप्राजापत्यव्यूहरश्मीन्समूहतेजोयत्तेरूपंकल्याणतमंतत्तेपश्यामि ॥ १६ ॥

भा० । प्रधानज्ञानरूपतः । विष्णुरेकऋषिर्ज्ञेयोयमोनियमनाद्धरिः ।

अनेनभावप्रधानोनिर्देशइत्युक्तंभवति।एतेनएकएवऋषतीत्येकर्षिरित्यपास्तं।रमादिव्यावृत्त्यर्थंप्राधान्यंव्याचष्टे॥प्राधान्यंचेति॥
आदिपदेननिरतिशयस्पष्टत्वादेर्ग्रहणं। प्रसिद्धयमस्यापियत्किंचिन्नियामकत्वादाह॥ सर्वस्येतिशेषइति ॥ सूरिशब्दोपप
दस्ययातेरिति॥ तृतीयांतेसूरिशब्देउपपदे याप्रापणइत्यस्मादातोनुपसर्गेकइतिकर्मणिकप्रत्यये आतोलोपइटिचेत्याकारलोपे
निर्वचनत्वादुपपदैकारलोपेसूर्यइतिरूपमित्यर्थः। नन्वातोनुपसर्गेकइतिसूत्रस्यकाशिकायामाकारांतेभ्योनुपसर्गेभ्यःकर्मण्युपप
देकप्रत्ययोभवतीतिव्याख्यातत्वादत्रकर्मणउपपदस्याभावात्कथमनेनकप्रत्ययः। किंचकर्तरिकृदितिपरिभाषयाकर्तर्येवकप्रत्यय

प्राधान्यंचज्ञानस्य सर्वविषयत्वादिनाज्ञातव्यं। नियमना त्सर्वस्येतिशेषः।
सूर्यःससूरिगम्यत्वादित्यनेन सूरिशब्दोपपदस्ययातेरूपमिदमित्युक्तंभवति।

स्यगांददातीतिगोदइत्यादाविवसंभवेपीहसूरिगम्यत्वादितिभाष्यानुसारेणकर्मणितदयोगादितिचेत्सत्यं। छंदस्त्वेनात्रोपाधिद्व
यव्यभिचारस्यादोषत्वात्। संमतंचैतट्टीकाकारस्य। द्वितीयाध्याये आनो भजपरमेष्वित्यस्यामृचि अंतेमोक्षेमितत्वेनज्ञा
नमंतममुच्यतइतिभाष्यव्याख्यानावसरे अंतेसंसारस्येतिशेषः। तस्यार्थो मोक्षइति तादर्थ्येसप्तमी। मोक्षसाधनतयेतियावत्।
मितत्वेनप्रमितत्वेन। आतोनुपसर्गेकइतिटीकायामुक्तत्वात्। तत्रहिसप्तम्यंतेअंतशब्देउपपदेमाङ्मानइत्यस्मात्कर्मणिकप्रत्ययो
ऽभिमतः। नचासावुक्तोपाधिद्वयस्याव्यभिचारित्वेसंभवतीति। यद्वासुपिस्थइतिसूत्रव्याख्यानावसरेकाशिकायामत्रयोगवि

भा०। सूर्यःससूरिगम्यत्वात्

भागःकर्तव्यः । सुपिआकारांतेभ्यःकप्रत्ययोभवति । द्वाभ्यांपिबतीतिद्विपइत्युक्तत्वादत्रापियोगविभागेनाकर्मणिसूरिशब्देउप पदेयातेःकर्मणिकप्रत्ययेबाधकाभावात् । नचयोगविभागाश्रयणेनोपपदनियमाभावेपिकर्तरिकृदितिपरिभाषयाकर्तर्येवकप्रत्ययःप्राप्नोतिनकर्मणीतिवाच्यं । योगविभागस्येष्टसिध्यर्थत्वेनकर्तरीत्यननुवृत्त्याकर्मण्यपितत्संभवात् । अथवा ग्रहवृद्दनिश्चिगमश्चेत्येतत्सूत्रीयाद्धञर्थेकविधानमितिवार्तिकादिहकर्मणिकप्रत्ययांगीकारात् । नचघञर्थेकविधानमित्युक्त्वा स्थास्नागापाव्यधिहनियुध्यर्थमित्युक्तत्वेनवार्तिकस्यापिस्थास्नादिषुनियमितत्वात्कथंतेनापियातेःकप्रत्ययइतिवाच्यं। अभियुक्तप्रयोगानुसारेणास्यापि

**प्रजापतेर्हिरण्यगर्भस्यायंप्राजापत्यइत्यभिसंधाय संबंधोदर्शितः । प्रजापतेर्गम्यत्वादिति ॥ तर्हिसूर्य इत्यनेनगतार्थत्वमित्यतउक्तं । विशेषेणैवेति॥ एतेनप्रजापतेरपत्यमितिव्याख्यानंनिरस्तंभवति ॥ १६॥**

तत्रोपसंख्येयत्वात् । अतएवसुधायां मायामात्रमिदंद्वैतमित्येतद्व्याख्यानावसरेघञर्थेकविधानमितिकर्मणिकप्रत्ययइत्युक्तमिति ध्येयं । एतस्यैवसूर्यशब्दस्य सूर्यऊरीकृतेरयमितिबृहद्भाष्येकृतस्यव्याख्यांतरत्वान्नदोषः । ननुप्रजापतेर्गम्यत्वात्प्राजापत्यइति व्याख्यानमयुक्तं । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यइतिप्राग्दीव्यतीयेषुविहितस्यण्यप्रत्ययस्यसंबंधार्थेविधानेपि गम्यत्वार्थेअविधानादित्यतःतात्पर्यार्थत्वेनभाष्यंयोजयति ॥ प्रजापतेरिति ॥ अभिसंधायेति ॥ संबंधार्थेण्यप्रत्ययमभिप्रेत्येत्यर्थः ॥ तर्हीति ॥ सूर्यशब्देनसूरिमात्रगम्यत्वोक्त्याहिरण्यगर्भगम्यत्वस्यापिप्राप्तत्वादितिभावः ॥ १६ ॥ अहेयत्वादहंनामेतिप्रमाणा ॥ ५५ ॥

भा० । प्राजापत्यःप्रजापतेः । विशेषेणैवगम्यत्वात् ॥ १६ ॥

नुसारेणभावप्रधानोनिर्देशइत्याह ॥ **अहेयत्वतइति** ॥ अहंशब्देनाहेयत्वलाभप्रकारंसूचयति ॥ **नहीयतइति** ॥ अनेननञ्पूर्वादोहाकृत्यागइत्यस्मात्कर्मणिघञर्थेकविधानमितिवार्तिकेणकप्रत्ययेकित्त्वादातोलोपइटिचेत्यकारलोपेऽहमितिरूपनिष्पत्तिरित्युक्तंभवति । यद्यप्यस्मदादेशभूतस्याहमित्यस्यरूढत्वान्ननिर्वचनीयत्वं । तथापि हरौतद्वृत्तौनजीवाभेदोनिमित्तमितिप्रतिपादनायप्रयोजनवशान्निर्वचनंकृतमितिज्ञातव्यं । नन्वहमितिप्रथमैकवचनस्योक्तनिर्वचनलब्धाहेयत्वेननिमित्तेनभगवतिप्रवृत्तिसंभवेपि द्विवचनबहुवचनयोर्द्वितीयादिविभक्तीनांचकथमहेयत्वेननिमित्तेनभगवतिप्रवृत्तिः । तत्रनहीयतइतिनिर्वचनासंभवात् । नचभगवतिद्विवचनादिवृत्तिर्नाहेयत्वेन किंतुनिमित्तातरेण । अतोनैतन्निर्वचनगवेषणप्रयासइतिवाच्यं । अस्मच्छ

**अहेयतः अहेयत्वतः । नहीयतइत्यहमित्यर्थः ॥**

ब्दगतसप्तविभक्तीनांसर्ववचनानामप्यहेयत्वेनैवभगवतिवृत्तेःप्रमाणसिद्धत्वाद्भगवत्पादवचनसिद्धत्वाच्च । यथोक्तंबृहद्भाष्ये । मे सर्वाहेयस्यविष्णोः । अस्मच्छब्दगतैर्विष्णुर्वाच्यःसप्तविभक्तिभिः ॥ सर्वाहेयत्वतस्त्वेकइत्यादि । सर्वाहेयत्वेनाहमितिप्रथमांतशब्दवाच्यत्वसंभवेपि मइतिषष्ठ्यंतशब्दवाच्यत्वंकथमित्यतस्तत्रप्रमाणमाह ॥ अस्मदिति ॥ इतिभावबोधेअवतारितत्वाच्चेतिचेत् । अस्यार्थस्यप्रमाणज्ञेयत्वेपिनिर्वचनाज्ञेयत्वात् । निर्वचनस्यापिमहाव्याकरणरीत्यासंभवेप्याधुनिकरीत्याऽसंभवात् । अहंशब्देतुप्रसिद्धव्याकरणरीतिसंभवान्निर्वचनंकृतमितिभाति । अधिकंतुविचार्यं । अस्तितामानादित्यत्र अस्तितयामानादिति

भा० । अहंचासावहेयतः ।

तृतीयातत्पुरुषः । तृतीयाचप्रकारे । मानशब्दःप्रमापरः । निर्विशेषस्यमुख्यार्थत्वात् । सत्वेनप्रमितत्वस्यवस्तुमात्रसाधारण त्वादसाधारण्यायनित्येतियोग्यतयासंबध्यतइत्याशयेनव्याचष्टे ॥ नित्यसत्वेनेति ॥ अस्मिशब्दात्सत्वेनप्रमितत्वंकथंलभ्य तइत्यतआह ॥ अनेनेति ॥ असभुविमाङ्मानइत्याभ्यांडिप्रत्ययेद्वितीयधातोष्टिप्रत्ययेअस्मीतिरूपमितिभावः । ननुकथंधातु द्वयादेकःप्रत्ययः । परश्चेतिसूत्राद्धातोरितिपंचम्याचधातोरव्यवहितोत्तरमेवकार्यंभवतीतिविज्ञानात् । धातोरित्येकवचनाद पिनधातुद्वयादेकप्रत्ययोत्पत्तिरितिचेन्मैवं । धातुद्वयादपिप्रत्ययोत्पत्तेरपिभूभ्यांडुतजित्युणादिसूत्रेउक्तत्वात् । अदभक्षणेभूस

नित्यास्तितामानादिति ॥ नित्यसत्त्वेनप्रमितत्वादित्यर्थः । अनेनअसभुविमाङ्मानइत्येतयो रिदंरूपमित्युक्तंभवति । अहमस्मिशब्दोक्तत्वेपिनजीवैक्यंहरेराशंकनीयमित्याह ॥ स्वयं त्विति ॥ सर्वजीवेभ्योव्यतिरिक्तोप्यहेयत्वादियोगेनैवाहमस्मिशब्दाभ्यामुच्यतइत्यर्थः ।

त्तायामितिधातुद्वयात्डुतच्प्रत्ययेटिलोपेचसतिअद्भुतमितिरूपसिद्ध्यंगीकारात् । नचप्रसिद्धोणादिवृत्तावदिभुवोडुतजितिसूत्रं पठित्वा अद्युपपदेभुवोधातोर्डुतज्भवतीतिसूत्रस्यव्याख्यातत्वात्कथंधातुद्वयात्प्रत्ययोभवतीत्यत्रैतत्सूत्रोदाहरणमितिवाच्यं । मूलकोशेष्वदिभूभ्यामित्येवपाठदर्शनात् । वृत्त्यंतरेअदिभूभ्यामित्येवपठित्वाव्याख्यातत्वाच्च । धातुव्यतिरिक्तस्यादित्युपपद स्याभावेनादिभुवइतिपाठस्यायुक्तत्वाच्च । निघंटुभाष्ये वेदभाष्येचधातुसमुदायादेकप्रत्ययस्यबहुशोभिहितत्वाच्च । तस्माद्धातु ॥ ५६ ॥

भा० । अस्मिनित्यास्तितामानात्सर्वजीवेषुसंस्थितः । स्वयंतुसर्वजीवेभ्योव्यतिरिक्तःपरोहरिः ।

द्वयात्प्रत्ययांगीकारोयुक्तइति ॥ एतेनेति ॥ अहेयत्वादिनाअहमादिशब्दवाच्यत्वकथनेनेत्यर्थः ॥ मूर्तिनियमोपीति ॥ नकेवलमहेयत्वादिप्रवृत्तिनिमित्तनियमइत्यपेरर्थः । ननुसर्वजीवेषुसंस्थितइत्ययुक्तं । भगवदुपासकैरेवसाक्षात्कारार्थमहमस्मि शब्दवाच्यतयाभगवतःप्रार्थ्यमानत्वेनोपासकांतर्गतस्यैवाहमादिशब्दवाच्यतायावक्तुमुचितत्वादित्यतआह ॥ उपासकेष्वि त्यर्थइति ॥ विशिष्योक्त्याअहमस्मिशब्दवाच्यत्वएवमूर्तिनियमो नतुपूषादिशब्दवाच्यत्वइतिप्रतीतिःस्यादतआह ॥ उपल क्षणंचैतदिति ॥ एतत् अहमस्मिशब्दाभिधेयस्यहरेर्मूर्तिनियमकथनमुपलक्षणमित्यर्थः । उपलक्षणीयंदर्शयति ॥ पूषादि

एतेन नाहंत्वांभृत्यवद्याचे किंनाम योसावादित्येपुरुषःसोहमस्मीत्यपव्याख्यानमित्यु
क्तंभवति । अहमस्मिशब्दाभिधेयत्वेहरेर्मूर्तिनियमोप्यस्तीत्याह ॥ सर्वजीवेष्विति॥
उपासकेष्वित्यर्थः । उपलक्षणंचैतत् । पूषादिशब्दैरप्यादित्याद्यंतर्गतएवोच्यते ।

शब्दैरपीति ॥ यद्यप्यत्रपूषादिशब्दैः पूषाद्यंतर्गतएवोच्यतइतिवक्तव्यं । तथापिपूष्णोपिद्वादशादित्यांतर्गतत्वादादित्यांतर्ग तइत्युक्तमितिज्ञेयं । अत्रादित्याद्यंतर्गतएवोच्यतइत्येवपाठः । मूलकोशेषुतथैवदर्शनात् । एकर्षियमादिशब्दवाच्यत्वोपपादना यादिशब्दस्यावश्यकत्वाच्च । योग्यताभेदेनेत्याद्युत्तरवाक्यानुगुण्याच्च । आदित्यांतर्गतइतिक्वाचित्कपाठे आदित्यशब्दस्योप लक्षणत्वेनादित्याद्यंतर्गतएवोच्यतइतिव्याख्यातव्यं । अन्यथाआदित्यांतर्गतस्यपूषसूर्यशब्दवाच्यत्वसंभवेप्येकर्षियमादिशब्द वाच्यत्वासंभवादुत्तरवाक्यवैगुण्याच्च । नन्वादित्यांतर्गतभगवत्साक्षात्कारायानेकप्रतीकेषुभगवत्प्रार्थनमसंगतमित्यतस्तस्याभि

प्रायमाह ॥ योग्यताभेदेनेति ॥ अतोयुक्तंनानाप्रतीकगतभगवत्प्रार्थनमितिभावः । ननुक्रतुशब्दस्ययज्ञवाचित्वेपि ज्ञानवा
चितायाअप्रसिद्धत्वात्कथंसक्रतुर्ज्ञानरूपत्वादितिव्याख्यानमित्यतोगीताभाष्योदाहृताभिधानपठनेनतद्धटयति ॥ क्रतुर्मतिर्म
नीषेत्यभिधानादिति ॥ यथोक्तंगीताभाष्ये । आत्ममायया आत्मज्ञानेन । केतुःकेतश्चितिश्चित्तंक्रतुर्मतिर्मनीषामायेतिह्य
भिधानमिति । इतिप्रज्ञायानामधेयानीतिवाक्यशेषादितिप्रमेयदीपिकायामुक्तत्वाज्ज्ञाननामधेयत्वंगम्यते । नचमेधादृष्टिर्धृति
र्मनीषाजूतिःस्मृतिःसंकल्पःक्रतुरसुःकामोवशइत्यैतरेयश्रुतेः । प्रकृतोपयुक्तसंबंधाभिप्रायेणायमनुवादः । प्रज्ञानस्यनामधेयानि

अधिकारियोग्यताभेदेनखलुनानाप्रतीकेषुभगवदापरोक्ष्यमत्रप्रार्थ्यते । क्रतुर्मतिर्मनीषेत्यभिधाना
त्सक्रतुर्ज्ञानरूपत्वादित्युक्तं । अंगंशरीरमप्रधानंजगद्वा नयतीत्यग्निरित्यर्थः । एवंपुराणवाक्येनतात्पर्य
तोव्याख्यातान्मंत्रानिदानींस्ववाक्येनविशदय न्सत्यधर्मपदं कथंभक्तस्यवाचकमित्यतास्तन्निर्वक्ति ।

भवंतीत्युक्तत्वादभिधानादित्युक्तमितिव्याख्यानंकिंनस्यादितिवाच्यं । स्पष्टंभगवत्पादोदाहृताभिधानसद्भावेउक्तकुसृष्ट्याश्रय
णस्यानुचितत्वात् । मतिर्मायासुततत्वतः । मनुनाम्नामजादीनांमनीषेशोयतोहरिः ॥ क्रतुःससर्वकर्तृत्वादित्यादिनाऐतरेयभाष्ये
क्रतुमतिमनीषाशब्दानांप्रकारांतरेणव्याख्याततयाज्ञानपरत्वाभावेनतदुदाहरणस्यात्यंतासंगतत्वाच्च । तस्मादुक्तमेवव्याख्यानं
युक्तमिति । किंतदंगं कथंचतत्प्रणेतृत्वमग्निशब्दार्थइत्यतआह ॥ अंगंशरीरमिति ॥ अनेनअंगशब्दोपपदात्नीञ्प्रापणइ ॥ ५७ ॥

भा० । सक्रतुर्ज्ञानरूपत्वादग्निरंगप्रणेतृतः ।

त्यस्मात्कर्तरिडिप्रत्यये निर्वचनादुपपदानुस्वाराकारयोर्लोपेअग्निरितिरूपमित्युक्तंभवति । अनन्वयशंकायांसत्यधर्मायभक्ताये
तिप्रमाणानुसारेणशेषंपूरयति ॥ भक्तउच्यतइतिशेषइति ॥ ननुब्रह्माधारकत्वस्यभक्ताभक्तसाधारणत्वाद्विशिष्यभक्तउच्यत
इतिशेषपूरणमयुक्तं । नचाध्याहृतहृदयपदमहिम्नाएतल्लभ्यइतिवाच्यं । हृदयपदाध्याहारस्यैवाकर्तव्यत्वात् । कर्तव्यत्वेपितेनभ
क्तलाभासंभवादित्यतोहृदयपदाध्याहारस्यावश्यकत्वप्रदशनपूर्वकंतेनभक्तलाभप्रकारंचदर्शयति ॥ अत्रसत्यमित्यादि ॥ अ

सत्यमिति । भक्तउच्यतइतिशेषः । अत्रसत्यंब्रह्मधारयतीतिसत्यधर्मेत्युक्ते कथमनाधारंब्रह्मायं
धारयतीतिशंकास्यात्तन्निवृत्त्यर्थं हृदयेधारयतीत्युक्तं । हृदयेब्रह्मधारणंचादरनैरंतर्योपेतं तद्ध्याना
दिकमेव तच्चभक्तस्यैवसंभवतीतिभावः । सत्यस्यचतथाभूतस्यधर्मस्यानुष्ठातेतिव्याख्याने सत्यस्या
पिहित मितिप्रकृतपरित्यागोदोषः ॥ १७ ॥ ततश्चायमर्थः । हिरण्मयमिवहिरण्मयंज्योतिर्मयं

नाधारमिति ॥ सभगवःकस्मिन्प्रतिष्ठितइतिस्वेमहिम्नीत्यनन्याधारत्वश्रुतेरितिभावः । अनेनापव्याख्यानंनिरस्तमित्याह ॥
सत्यस्येति ॥ इतिप्रकृतपरित्यागइति ॥ इत्यत्रसत्यशब्देनप्रकृतपरित्यागइत्यर्थः । परेणसत्यस्यादित्यमंडलस्येतिव्याख्या
तत्वादस्माभिःपरमात्मनइतिव्याख्याततत्वात्पक्षद्वयेपिपरस्यप्रकृतपरित्यागइतिभावः । भा० ॥१७॥ उदकंपीयतेतेनतमसस्त्राय

भा० । सत्यंब्रह्महृदयेधारयतीतिसत्यधर्मा ॥ १७ ॥

तेजगत् ॥ यतोयःपात्रमुद्दिष्टंविद्वद्भिःसूर्यमंडलंइतिबृहद्भाष्योदाहृतप्रमाणंमनसिनिधायव्याचष्टे ॥ पिबतिरसानिति ॥ सूर्यमंडलेनेति ॥ तदुपलक्षिताज्ञानादिनाचेत्यर्थः ॥ १५ ॥ स्वरूपंबाह्यंचेति ॥ रश्मिशब्दव्याख्यानंस्वरूपंज्ञानमिति ॥१६॥ तत्वप्रदीपे अहंतत्तेजोरश्मीन्नारायणमित्येतद्व्याख्यानावसरे रतिःशंचमितमस्येतिरश्मिर्जीवइतिव्याख्यातत्वेन जीववाचकस्यरश्मिशब्दस्यतत्स्वरूपज्ञानेलक्षणामभिप्रेत्येदंव्याख्यानमितिद्रष्टव्यं । तेजःशब्दस्यव्याख्यानं बाह्यंज्ञानमिति । वृत्तिरूपंज्ञान

पिबतिरसांस्त्रायतेचजगदितिपात्रं । तेन हिरण्मयेनपात्रेणसूर्यमंडलेन । सत्यस्यसद्गुणपूर्णस्य आदित्यमंडलांतर्गतस्य तवमुखंपिहितमस्ति । हेपूषंस्तद्वपुस्त्वं सत्यधर्माय त्वद्विषयध्यानादिमते मह्यंदृष्टये ममत्वद्दर्शनसिद्ध्यर्थमितियावत् । अपावृणु अपगतावरणंकुरु । खं० ॥ १५ ॥ हेपूषन्नेकर्षे यम सूर्य प्राजापत्य मदीयान्रश्मीन्व्यूह । तेजश्चसमूह । स्वरूपंबाह्यंचमदीयज्ञानंविस्तारयेतियावत् । तथा चयत्तेरूपंकल्याणतमंतत्तेप्रसादादहंपश्यामीति । आदित्यरश्म्यादीनामपगमनादिनातदंतर्गत

मित्यर्थः । इदंचांतःकरणस्यतैजसत्वेनतत्परिणामरूपवृत्तेरपितेजःशब्दवाच्यत्वात् । एवंतेजःप्रातिभाख्यंबाह्यंचेतिद्विधामतमितिप्रमाणानुसाराच्चोपपद्यतइतिभावः । द्वितीयस्यतइत्यस्यपश्यामीत्यनेनसाक्षादन्वयासंभवाद्रूपमित्यनेनचाद्यस्यान्वितत्वादपेक्षिताध्याहारेणान्वयमाह ॥ तेप्रसादादिति ॥ रश्मितेजःशब्दौस्वरूपबाह्यज्ञानपरतयास्वयंव्याख्याययत्परेणव्याख्यातं रश्मीन्स्वान्व्यूह विगमय । तेजस्तावकं समूह एकीकुरुउपसंहरेति । तद्दूषयति ॥ आदित्यरश्म्यादीनामिति ॥ आद्ये

नादिशब्देनतेजसोद्वितीयेनोपसंहरणस्यचसंग्रहः ॥ ब्रह्मप्रतीत्यसंभवादिति ॥ श्रवणादिसाधनपरिपाकंअव्यक्तस्वभावस्य ब्रह्मणोनुग्रहंचविना रश्म्याद्यपगममात्रेणसाक्षात्कर्तुमशक्यत्वादितिभावः ॥ ७ ॥ ननुप्रातिपदिकमात्रस्यशब्दत्वेनव्यवहारेइतिशब्दानपेक्षायामपिविभक्त्यंतस्यतुतत्वेनव्यवहारे अस्तीतिशब्दापेक्षा । तथैवसांव्यवहारिकत्वात् । प्रकृतेचनप्रातिपदिकमात्रग्रहणं । तथात्वेएकोसुशब्दइतिवाअदसूशब्दइतिवास्यात् । किंतुविभक्त्यंतस्य । तथात्वेअसावितिशब्दइतिवक्तव्यं । तत्कथमसौशब्दइत्युक्तमित्यतः सत्यमत्रापीतिशब्दाध्याहारान्नदोषइत्याशयेनाह ॥ असौशब्दोऽसावितिशब्दइति ॥ यद्वा

ब्रह्मप्रतीत्यसंभवादादित्यरश्म्यादिविषयंव्याख्यानंनयुक्तं। खं० ॥१६॥ योसावसौपुरुषइत्यत्र
द्विरसावितिकिमर्थमित्यतआह ॥ एकइति ॥ असौशब्दोसावितिशब्दः। इतिवक्तीतिशेषः ।

यःकश्चनासावेकःशब्दःप्राणेइत्यर्थभ्रांतिनिरासायाह ॥ असौशब्दोसावितिशब्दइति ॥ असुशब्दस्यसप्तम्यंतमिदमिति ज्ञापनाय भाष्येप्राणइतिसप्तमीप्रयोगइत्याशयेन कथंतेनतज्ज्ञापनमित्यतोपेक्षितमध्याहरति ॥ इतिवक्तीतिशेषइति ॥ एवंचअसावितिशब्दःप्राणेइत्यर्थंवक्तीत्युक्त्यासप्तम्यंतोयमसुशब्दःप्राणप्रतिपादकइतिभाष्यार्थःसंपद्यते । शेषपूरणाभावेतु एकोसावितिप्रथमांतःशब्दःप्राणेवर्तते प्राणविषयतयाव्याख्यातव्यइतिभाष्यार्थःप्रतीयेतेतिभावः । भाष्ये प्राणइत्यतःपरंश्रूयमाण



भा० । एकोसौशब्दः

स्यस्थितइत्यस्यवैयर्थ्यशंकायां पूर्वभाष्यार्थविवरणपूर्वकं तद्व्यावर्त्याशंकामुत्थापयति ॥ यद्यसुःप्राणइति ॥ असुशब्दःप्राणवाचकः । तस्यसप्तमीअसाविति । ततश्चासौप्राणे । इत्यर्थोयदिस्यादित्यर्थः ॥ अस्येति ॥ असावितिसप्तम्यंतस्येत्यर्थः । कुतइत्यतआह ॥ क्रियापेक्षत्वादिति ॥ असावित्यधिकरणसप्तमीत्वात्क्रियाश्रययोःकर्तृकर्मणोराधारस्यचाधिकरणत्वात् क्रियापेक्षत्वमधिकरणस्येत्यर्थः ॥ क्रियाध्याहारेणेति ॥ क्रियाश्रयकर्तृवाचकस्थितपदाध्याहारेणेत्यर्थः । अत्रटीकायांस्थितइतीत्येवप्रतीकग्रहणमुचितं । तस्यैवोक्तशंकानिवर्तकत्वात् । भाष्येपि प्राणेइत्यतःपरं स्थितइतिपाठदर्शनात् प्राणेस्थितोयःपुरुषःसोसावहमितिस्मृतइत्येतन्मंत्रव्याख्यानरूपेबृहद्भाष्योदाहृतप्रमाणेप्राणइत्यतःपरं स्थितइतिक्रियाध्याहारस्यस्पष्टत्वेनतदनुसारेणात्रापिभाष्येप्राणइत्यतःपरंस्थितइतिपाठस्यावश्यकत्वाच्च । यस्मिन्नितीतिप्रतीकग्रहणंतुप्रकृतानुपयुक्तत्वादयुक्तं । उत्तरत्रावतारिकापूर्वकंतस्यव्याख्यास्यमानत्वाच्च । नचयस्मिन्नितिवाक्यगतस्यस्थितइत्यस्यप्रकृतोपयोगाभिप्रायेणतत्प्रतीकग्रहणमितिवाच्यं । तस्यप्रागध्याहृतानुवादरूपत्वेपिस्वयमध्याहाररूपत्वाभावेनक्रियाध्याहारेणान्वयंदर्शयतीतिटीकायाअस्वारस्यप्रसंगात् । भाष्येप्राणइत्यतःपरंस्थितइतिपाठस्यमूलकोशेषुदर्शनाच्चेति । भाष्यकृद्व्याख्याने असावसावितिशब्दयोरेकत्रश्रुतयोर्वैरूप्यं स्थितइत्यध्याहारंचासहमानःप्रकारांतरमाशंकते ॥ असावसावितीति ॥ वीप्सार्थतयेति ॥ प्रयोक्तुर्व्याप्तिविषयाइच्छावीप्सा तदर्थतयेत्यर्थः । योयोधूमवानसावसावग्निमानित्यादौदृष्टत्वादितिभावः । किमध्याहारादिरेवभाष्यकृद्व्याख्याने दोषः उतवीप्सायाअसिद्धिः । आद्येआह ॥ एवंव्याख्यानइति ॥ प्रतीकांतरस्यसर्वप्रतीकोत्तमत्वंसूचयितुंप्राणाख्येत्युक्तं । महार्थलाभादध्याहारादिर्गुणएवनदोषः । नहि मृगभयाद्वीजानामनवापःसंभवतीतिभावः । द्वितीयंदूषयति ॥ एकेनापि शब्देनेति ॥ असावितिशब्देनेत्यर्थः । योयोधूमवानितिवद्योधूमवानसावग्निमानितीत्युदाहरणवाक्यस्यापिसांव्यवहारिकत्वात् । अन्यथातत्रवीप्सायाअसिद्धिप्रसंगादितिभावः । नन्वेकेनशब्देनवीप्सासिद्ध्यंगीकारेनित्यवीप्सयोरित्येतत्सूत्रविरोधः । नित्यवीप्सयोः । सर्वस्यद्वेइत्यनुवर्तते । नित्यमाभीक्ष्ण्यं वीप्साव्याप्तिप्रतिपादनेच्छा नित्येवीप्सायांचार्थेतद्वर्ततेतस्यद्वेभवतः । नित्ये पचतिपचतीत्यादि । वीप्सायां ग्रामोग्रामोरमणीयः । वृक्षंवृक्षंसिंचतीत्यादि । अत्रवीप्सायांद्विर्भावस्यविहितत्वादिति चेत् मैवं ॥ ब्राह्मणोनहंतव्यइत्यादौव्यभिचारेण नित्यवीप्सयोरित्यस्यानित्यतायादुर्घटवृत्त्यादावुक्तत्वेनात्रद्विर्भावाभावसंभवादित्याशयात् । ननुदर्शनप्रार्थनप्रकरणे योसावित्यादिस्वरूपप्रतिपादनमसंगतमित्यतः पश्यामीतिपूर्वेणान्वयमंगीकृत्यश्रुतियो

यद्यसुःप्राणस्तस्मिन्नित्यर्थःस्यात्तर्ह्यस्यान्वयोनास्ति । क्रियापेक्षत्वादधिकरणस्येत्यतःक्रियाध्याहारेणान्वयंदर्शयति ॥ स्थितइति ॥

भा० । प्राणेस्थितइति ॥

असावसावितिवीप्सार्थतयाकिंनव्याख्यायतइतिचेन्न । एवंव्याख्याने प्राणाख्यप्रतीकांतरस्याप्युक्तिलाभात् । एकेनापिशब्देनवीप्सासिद्धेः ।

जनाप्रकारंदर्शयति ॥ तथाचेति ॥ एवंयोसावित्यादेःपूर्वेणएकवाक्यत्वमंगीकृत्य तंचपश्यामीतिपूर्वेणसंबंधोदर्शितः । तस्मि न्पक्षेभगवद्रूपेषुभेदशंकानिवर्तकस्यान्यस्याभावात्तन्निवर्तकतयाभिन्नवाक्यतामंगीकृत्ययोजनांतरमाह ॥ अथवेति ॥ अयम त्रयोजनाक्रमः । अथवातत्रभेदशंकायामिदमाहेत्यन्वयः । तत्र प्राणाद्यनेकप्रतीकस्थभगवद्रूपेषु भेदशंकायां अधिष्ठानभे दप्रयुक्तभेदशंकायामिदमाह । योसावित्यादिवाक्यमभेदप्रतिपादनायाहेत्यर्थः । ननुपूर्वंभगवतःपूषाद्यनेकप्रतीकस्थत्वोक्ताव पिप्राणादिस्थत्वानुक्तेःकथंतत्रभेदशंकेत्यतउक्तं ॥ पूषादिशब्दैरुपलक्षणयेत्यादि ॥ विशिष्यलक्षणायांनियामकाभावात्पू

तथाचयोसौप्रसिद्धोसौप्राणेस्थितःपुरुषःसएवाहेयत्वनित्यसत्तामानाभ्यामहमस्मिशब्दाभि धेयस्तंचपश्यामीतिवाक्यार्थः । अथवापूषादिशब्दैरुपलक्षणयाप्राणाद्यनेकप्रतीकस्थत्वं विष्णोरुक्तं । तत्रभेदशंकायामिदमाह ॥ सर्वप्रतीकेषुस्थितएकएवेत्यर्थः । भा० ॥ १७ ॥

षादिशब्दैरित्युक्तं । अजहल्लक्षणेतिसूचनायो पलक्षणयेत्युक्तमिति । नन्वेवमपियोसावित्यादिपरिहारवाक्यासंगतिरेव । तत्र योसौ प्रसिद्धोसौ प्राणेस्थितःपुरुषः । सएवाहेयत्वनित्यास्तितामानाभ्यामहमस्मिशब्दवाच्यतयोपासकेषुस्थितइतियोजनया प्राणप्रतीकस्थस्योपासकप्रतीकस्थस्यचविष्णोरभेदोक्तावपि पूषादिप्रतीकस्थस्यतदनुक्तेरित्यतस्तद्वाक्यतात्पर्यमाह ॥ सर्वप्रती केष्विति ॥ एकएवेतिवदताश्रुतौतदध्याहर्तव्यमितिसूचितं ॥ भा० ॥ १७ ॥ ततश्चयोसौ प्रसिद्धोसौप्राणेस्थितः यश्चाहम ॥ ६० ॥

उप० । योसावसौपुरुषःसोहमस्मि ॥ १७ ॥

स्मिशब्दवाच्यतयोपासकेषुस्थितः उपलक्षणमेतत् । यश्चपूषादिशब्दवाच्यतयापूषादिषुस्थितः । ससर्वोप्येकएव नाधिष्ठानभेदप्रयुक्तभेदवान् । सर्वेषुभूतेष्वेतमेवब्रह्मेत्याचक्षतइतिश्रुतेरितियोजनोक्ताभवतीति ॥ खं० ॥ १७ ॥ वायुरनिलममृतमितिवाक्यस्यभाष्यकृद्व्याख्यानदृढीकरणायापव्याख्यानमनूद्यदूषयति ॥ वायुरनिलममृतमित्येतद्वाक्यमित्यादि ॥ इत्येतद्वाक्यमित्यस्य इतिकेचिद्व्याचक्षतेइत्यनेनान्वयः ॥ अवश्यंभाविनीति ॥ मरिष्यतःप्राणोवायुंप्रतिपद्यतइत्यस्यार्थस्यप्रार्थनाभावेपिसिद्धत्वात्प्रार्थनानुपयोगः । कथंचित्तस्यदेवतानुस्मरणरूपत्वेनप्रार्थनीयत्वेपिदेहभस्मीभावस्यातथारूपस्यावश्यंभाविनः

वायुरनिलममृतमित्येतद्वाक्यं मरिष्यतोवायुःप्राणोध्यात्मपरिच्छेदंहित्वाधिदैवमात्मानं अनिलमामृतंप्रपद्यतां । अथेदंशरीरमग्नौहुतंभस्मांतंभूयादितिकेचिद्व्याचक्षते । तदसत् । अवश्यंभाविन्यर्थेप्रार्थनानुपयोगात् । प्रकरणादप्युपपत्तेर्बलीयस्त्वात् । अतोलिंगव्यत्ययेन

प्रार्थनानुपयोगएवेतिभावः । ननुतत्तेपश्यामीतिप्रार्थनाप्रकरणत्वादिदमपिप्रार्थनापरत्वेनव्याख्यायते । अन्यथाप्रकरणविरोधप्रसंगादित्यतआह ॥ प्रकरणादपीति ॥ उपपत्तेरिति ॥ प्रार्थनानुपयोगरूपोपपत्तेरित्यर्थः । वायविंद्रःसोमआदित्योबृहस्पतिरित्यत्र वायुशब्दस्य पृथिव्यामृभवोलीयंते वरुणेऽश्विनावग्नावग्नयइतिभूतप्रकरणेपठ्यमानस्यभूतवायुपरत्वशंकायामिंद्रादिलयाधिकरणत्वरूपोपपत्तिविरोधेन प्रकरणंबाधित्वामुख्यवायुपरतायाः भूतेषुतच्छ्रुतेः प्रधानवायुस्त्विहवायुनामाभूतेष्विति प्रोक्तगतेपियुक्त्येत्यादिनाशास्त्रेव्यवस्थापितत्वेनप्रकरणादुपपत्तेर्बलीयस्त्वमित्यर्थः । अपव्याख्याननिराकरणफलमाह ॥ अत

इति ॥ वायुरनिलंप्रपद्यतामितिवैयधिकरण्येनव्याख्यानस्यायुक्तत्वाद्वायुरनिलममृतमित्येतानिपदानिसमानाधिकरणानिप्रथमांविभक्तिमदायैकविभक्तिकानीत्यर्थः । ननुवायुरनिलममृतमितिस्पष्टंव्यधिकरणत्वात्कथंसमानाधिकरणानीत्यतः किंभिन्नलिंगत्वाद्व्यधिकरणत्वमाशंकसे उतपुल्लिंगत्वेनसमानलिंगत्वेपिभिन्नविभक्तिकत्वात् । नाद्यः । शब्दःप्रमाणमित्यादौभिन्नलिंगानामपिविशेषणविशेष्यभावदर्शनात् । ननुतत्रोभयोर्नियतलिंगत्वेनभिन्नलिंगत्वस्यादोषत्वेपि प्रकृतेअनिलामृतशब्दयोरनियतलिंगत्वादनियतलिंगानांविशेष्यनिघ्नत्वावश्यंभावात्कथंभिन्नलिंगानांविशेषणविशेष्यभावइत्यतउक्तं लिंगव्यत्ययेनेति ॥ अनि

**विभक्तिव्यत्ययेनवा समानाधिकरणान्येतानिपदानि । ननुतर्हिप्रकृतासंगता निस्युः । वायुरनिलंइतिपुनरुक्तिःस्यादित्यतआह ॥ यस्मिन्निति ॥ यस्मिन्वायौ**

लममृतमितिनपुंसकयोःपुल्लिंगत्वेनव्यत्ययेनेत्यर्थः । नद्वितीयइत्याह ॥ विभक्तिव्यत्ययेनेति ॥ अनिलममृतमितिद्वितीयायाःप्रथमात्वेनव्यत्ययेनेत्यर्थः । सुप्तिङुपग्रहलिंगनराणामितिस्मरणादुभयव्यत्ययोपपत्तिरितिभावः ॥ प्रकृतासंगतानीति ॥ भगवन्माहात्म्याप्रतिपादकत्वादितिभावः । यस्मिन्नित्यस्यपूर्वप्रकृतप्राणपरामर्शकत्वे यत्तदोःसमानविषयत्वात्सोप्यमृतइत्यत्रापिप्राणपरामर्शोवाच्यः । नचासौयुक्तः वायुरनिलममृतमितिश्रुतिविरोधापातात् । अतोव्याचष्टे ॥ यस्मिन्वायाविति ॥ प्राणस्यवायुत्वाकारेणवा वायोरेवबुद्ध्याप्रकृतत्वाद्वाऽयंपरामर्शइतिभावः । अयंवायुरितिभ्रमनिरासायब्रह्मशब्दप्रकृतस्यवा । ॥ ६१ ॥

भा० । यस्मिन्नयंस्थितःसोप्यमृतःकिमुपरः ।

बुद्ध्याप्रकृतस्यवा परामर्शइतिभावेनाह ॥ अयंपरमेश्वरइति ॥ किमुपरइत्यस्यानन्वयादपेक्षितंपूरयति ॥ अमृतइतिवक्तव्यमितिशेषइति ॥ अमृतइत्यस्यावृत्त्याकिमुपरइत्यनेनसंबंधे इतीत्यादिकमेवशेषइतिद्रष्टव्यं ॥ अस्यार्थस्येति ॥ यस्मिन्वायावयंपरमेश्वरःस्थितइत्यस्यार्थस्येत्यर्थः ॥ तात्पर्यतोव्याख्यातमिति ॥ यस्मिन्नयंस्थितइत्यनेनेतिशेषः । भाष्येनिलयनमित्येतच्छ्रौतनिलमित्यस्यव्याख्यानमितिज्ञापनायाह ॥ निलंनिलयनमिति ॥ तद्व्याचष्टे ॥ आश्रयइति ॥ ननुभाष्ये

**अयंपरमेश्वरःसोपिवायुरपिअमृतः किमुपरो ऽमृतइतिवक्तव्यमितिशेषः । नन्वस्मिन्वाक्ये वायुरमृतमित्येवोच्यते । नतुयस्मिन्वायावयंस्थितइति तत्कुतःकैमुत्यं लभ्यते । नहिवायोरमृतत्वमात्रेणेश्वरामृतत्वसिद्धिरितिचेन्मैवं । अस्यार्थस्यानिलपदेनोक्तत्वात् । तत्कथमित्यतस्तात्पर्यतोव्याख्यातं तदिदानींनिर्वक्ति । अः ब्रह्मैवेति । निलंनिलयनमाश्रयः । यथाश्रुतस्यानुवादोयमित्यतोऽनिलमित्युक्तं ।**

सोनिलइतिवक्तव्यं वायुविशेषणत्वात् । नचश्रुत्यनुसारेणानिलमित्युक्तिरितिवाच्यं । लिंगविभक्तिव्यत्ययेनतत्राप्यनिलइतिव्याख्यातव्यत्वस्योक्तत्वादित्यतआह ॥ यथाश्रुतस्येति ॥ लिंगादिव्यत्ययरहितस्येत्यर्थः । भाष्येयथाश्रुतानुवादोपि अदोषत्वादइत्युक्तोवायुस्तन्निलयोयतः । अनिलंततएवासावमृतंचेतिकीर्त्यतइत्यन्यत्रोदाहृतप्रमाणानुसारेणेतिज्ञातव्यं । अत्रप्रमाणे

भा० । अःब्रह्मैवनिलयनंयस्यवायोःसोनिलं ।

अइत्युक्तइत्यतःपरंहरिरितिशेषोद्रष्टव्यः ॥ अनेनेति ॥ अनिलशब्दस्ययौगिकत्वाश्रयणेनवायुरनिलमितिपुनरुक्तिःपरिहृते त्यर्थः ॥ तत्कथमिति ॥ यस्मिन्नयंस्थितइत्यादेरप्यनिलपदार्थत्वस्योक्तत्वात् विरुद्धयोश्चैकपदार्थत्वासंभवादितिभावः । अस्मिन्पक्षेनियामकत्वेनेत्यध्याहारोभवतीत्यतः तदाश्रयोपिह्यमृतःकिमुसाक्षात्स्वयंहरिरित्यन्यत्रोदाहृतप्रमाणानुसारेणपक्षांतरमाह ॥ अथवेति ॥ ननुयच्छब्देनपरमेश्वरपरामर्शे सोपीतितच्छब्देनतस्यैवग्रहणावश्यंभावेनकिमुपरइतिकैमुत्योक्तिरयुक्ता

अनेनपुनरुक्तिरपिपरिहृताभवति । ननुयस्मिन्नयंस्थितइत्यनेनवायुरीश्वराश्रयइत्युक्तं । अनेननिर्वचनेनेश्वरोवायोराश्रयइतिलक्ष्यते । तत्कथमनिलपदार्थोसावितिचेन्मैवं । यस्मिन्नयंस्थितइत्यनेनापियस्मिन्वायावयंपरमेश्वरोनियामकत्वेनस्थितइति वायोरीश्वराश्रितत्वस्यैवकथितत्वात् । अथवा यस्मिन्परमेश्वरेऽयंवायुःस्थितः यदधीनोवर्ततइतियावत् । सवायुरपि यदामृतः तदाकिमुवक्तव्यंसपरोमृतइतिव्याख्येयं । भा० ॥ १८ ॥ ततश्चेदमुक्तंभवति ॥ सोहमस्मीतिजीवांतर्गतस्यपरमेश्वरस्यनित्यास्तित्वंकल्याणतमरूपत्वंचोक्तं । तन्नयुक्तं । प्रत्यक्षतएवदेहस्यभस्मांतत्वदर्शनात् ।

स्यादित्यतस्तात्पर्यार्थमाह ॥ यदधीनइति ॥ अनेन यदाश्रयोपीतिप्रमाणस्यापीदमेवतात्पर्यमित्युक्तंभवति ॥ भा० ॥ १८ ॥ ननुवायुरनिलममृतमितिविशेषणानाममृतत्वरूपभगवन्माहात्म्यप्रतिपादकत्वेपि तत्प्रतिपादनस्यकापूर्वेणसंगतिः । अथेदंभस्मांतंशरीरमित्यस्यतुसर्वथानोपयोगंपश्यामइत्यतआह ॥ ततश्चेदमुक्तंभवतीति ॥ कल्याणतमरूपत्वंचेति ॥ इदंचाह

यत्वोक्तिलब्धमितिज्ञातव्यं । यद्वाआदित्यांतर्गतस्योक्तंकल्याणरूपत्वंसर्वजीवांतर्यामिसाधारणमित्यभिप्रेत्येदमुक्तं ॥मरणादीति ॥ आदिपदेनदुःखादिप्रयुक्तमकल्याणरूपत्वंद्रष्टव्यं । तथापीत्यादि प्रसंगइत्यंतंश्रुतौशेषकथनं ॥ परमेश्वरइति ॥ अचिंत्यैश्वर्यवानित्यर्थः । अनेनजीववदितिदृष्टांतवैषम्यमुक्तंभवति । यद्वापरमेश्वराश्रितस्यवायोरमृतत्वोक्त्यैवाचिंत्यशक्तिमत्त्वे

देहनाशेचतदंतर्गतस्यपरमेश्वरस्यजीववन्मरणाद्यवश्यंभावादित्याशंक्येदमुक्तं । वायुरनिलमिति ॥ अयमर्थः । यद्यपीदंशरीरंभस्मांतं । तथापितदंतर्गतस्यपरमेश्वरस्यनमरणादिदोषप्रसंगः । कुतः अनिलः परमेश्वराश्रितोवायुरपि यदामृतः । अथतदा परमेश्वरः किंवक्तव्यइति तदमृतत्वस्यकैमुत्यसिद्धत्वादिति ॥ ननुसंसारिणोवायोःकथममृतत्वं संभवति । यद्युपचारेण तर्हिईश्वरस्यापिकिंतथाविधममृतत्वमस्तीत्याशंकां स्मृत्यैवपरिहरति ॥ अतिरोहितेति ॥ देहनाशेपितत्कार्यविज्ञानातिरोभावाभावसादृश्यादित्यर्थः ।

नजीववैषम्यमुक्तमितिज्ञातव्यं । नन्वेतच्छंकायाःपूर्वार्धेनैवपरिहारादुत्तरार्धवैयर्थ्यमित्यतस्तद्व्यावर्त्यमाह ॥ यदीति ॥ अतिरोहितविज्ञानादित्येतद्वायोरमृतशब्दवाच्यत्वेनिमित्तकथनमितिभ्रमनिरासायव्याचष्टे ॥ विज्ञानतिरोभावेति ॥ अनेन

---

उप० । वायुरनिलममृतमथेदंभस्मांतꣳशरीरं ॥ १८ ॥

भा० । अतिरोहितविज्ञानाद्वायुरप्यमृतःस्मृतः ।

नामृतशब्दस्यवायौमुख्यवृत्तिः । येनसंसारित्वविरोधः । किंतुगौणी । तत्रयोगप्रदर्शनायातिरोहितेत्यादिविशेषणमित्युक्तंभवति । विज्ञानंचनस्वरूपमित्याशयेनोक्तं तत्कार्येति ॥ देहकार्येत्यर्थः । वृत्तिरूपेतियावत् । अत्रविज्ञानतिरोभावाभाववत्त्वेनैववायोर्मुक्तसादृश्यं । तच्चविज्ञानंमुक्तानांस्वरूपभूतं वायोस्तुवृत्तिरूपमितियोज्यं । ननुवृत्तिज्ञानतिरोभावाभाववत्वेनैवसादृश्यं । मुक्तेषुवृत्तिज्ञानप्रसक्तेरभावात् । ननुवृत्तिज्ञानतिरोभावाभावस्यरुद्रादिसाधारणत्वात्कोविशेषोवायोरित्यतउक्तं देहनाशेपीति । प्रलयेदेहनाशेपीत्यर्थः । अतएवोक्तमन्यत्रभगवत्पादैः । प्रलयेप्यविलुप्तज्ञानोवायुरिति । प्रलयेपिप्रतिभातपरावरः । मुख्यवायुर्नित्यसमइतिच । रुद्रादीनांतुप्रलयेवृत्तिज्ञानतिरोभावएवेतिभावः । अत्रवायोरिवभारत्याअपिप्रलयेवृत्तिज्ञानतिरोभावाभावोज्ञातव्यः । वियदधिकरणे अथहवावनित्यानिपुरुषःप्रकृतिरात्माकालइति । अथयान्यनित्यानि प्राणःश्रद्धाभूतानिभौतिकानिइत्येतद्व्याख्यानावसरेतत्वप्रकाशिकायां । आत्मापरमात्मा पुरुषादिपदैःजीवचैतन्यप्रकृतिस्वरूपकालप्रवाहाउच्यंते । तदभिमानिप्रकृतिश्च । प्राणोमुख्यवायुः श्रद्धातत्पत्नी । पुरुषपदेनगृहीतयोरप्यनयोश्चैतन्यमात्रादधिकमपिनित्यमस्तीतिदर्शयितुंपुनःसपरिकरयोर्ग्रहणमित्युक्तं । चैतन्यमात्रादधिकंचवृत्तिज्ञानमेव । एतदुत्तराधिकरणांतेतत्वप्रकाशिकायां । अत्रवायोःपरात्परनित्यत्वं स्वातंत्र्यलक्षणंदेहादेरपिनित्यत्वंचनास्त्येव । तथापिसम्यगनित्यताशून्येभ्योवियदादिभ्यःस्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणातिशयेननित्यतोच्यतइत्युक्तत्वात् । ननुप्रलयेवृत्तिज्ञानतिरोभावाभावेवायोःसुप्त्यनुपपत्तिः । वृत्त्युपरमस्यैवसुप्तित्वात् । नचनास्त्येववायोःप्रलयेसुप्तिरितिवाच्यं । सुषुप्तिसंस्थान्ब्रह्मादिकानितितदुक्तिविरोधापातात् । ब्र

ह्मग्रहणेनवायोरपिगृहीतत्वात् । नचब्रह्मादिकानित्यतद्गुणसंविज्ञानोबहुव्रीहिः । सुप्तास्तत्रयतोजीवाःसर्वेब्रह्मशिवादिकाइति विशेषप्रमाणविरोधादितिचेत् मैवं । यतस्तेषांसाऽस्मत्स्वप्नावस्थासदृशी । मनोवृत्तेःसद्भावात् । बाह्यव्यापाराभावाच्च । एवंचस्वप्नसुषुप्त्युभयसाधारणसुप्तिशब्दस्यतस्यामवस्थायांगौण्यावृत्त्याप्रयोगः । सुप्तिशब्दस्योभयसाधारणत्वंकुतइतिचेत् । उक्तंचबृहद्भाष्ये स्वप्नसुषुप्त्युभयाभिप्रायेण तानिसुप्तइत्युक्तमिति । उक्तंचषट्प्रश्नभाष्यटीकायां । स्वापोद्विविधः । स्वप्नःसुषुप्तिश्चेतीति । ततश्चवायोर्वृत्तिज्ञानाविरोधिस्वप्नएवप्रमाणेसुषुप्तिशब्दार्थोनतुवृत्तितिरोभावरूपाप्रसिद्धासुप्तिरतोनकश्चिद्दोषः । ननुप्रलयेऽन्येषामपिजीवानांमनोवृत्तिसद्भावेनकथंवायोरेवायंविशेषः । नचतत्रप्रमाणाभावः । यएषुसुप्तेषुजागर्तिकामंकामंपुरुषोनिर्ममाणइतिश्रुतेःपरमेश्वरस्यस्वाप्नपदार्थस्रष्टृत्वेनिर्मातारमितिसूत्रभाष्येप्रमाणत्वेनोपन्यासात् । एषुजीवेषुप्रलयादिषुसुप्तेष्वितिकाठकभाष्येप्रलयपरत्वेनास्याएवश्रुतेर्व्याख्यातत्वाच्च । तदुभयपर्यालोचनयाचप्रलयेपरमेश्वरस्यस्वाप्नपदार्थानिर्मातृत्वसिद्धिसंभवात् । नचप्रलयेनिर्माणमात्रमत्रोच्यते । नतुतत्कालीनमितिवाच्यं । भुंजानोनोत्सृजेद्वाचमित्यादाविवप्रकरणप्राप्तत्वात् । स्वाप्नपदार्थज्ञानंचवृत्तिरूपमेवेतिसिद्धोऽन्येषामपिप्रलयेवृत्तिसद्भावइतिचेन्मैवं । सुप्तिष्वित्यत्रसुप्तिशब्देनेदानींतनसुप्तिविवक्षायांस्वाप्नपदार्थनिर्माणस्य प्रलयकालीनसुप्तिविवक्षायांब्रह्मादिमनोवृत्तेः कालक्षणादेश्चनिर्माणस्यश्रुत्यर्थतया विवक्षितत्वेनसर्वजीवानांप्रलयेस्वाप्नपदार्थनिर्माणासिद्धेः । तस्मात्प्रलयेवृत्तिज्ञानतिरोभावाभावोवायोरेवेतियुक्तमिति । नन्वतिरोहितविज्ञानादित्यस्यबहुव्रीहित्वेनवायुपरत्वात्तेनसादृश्यंविरुद्धं । तिरोभावाभावसादृश्यादित्यर्थइतिचायुक्तमित्यतआह ॥

अतिरोहितविज्ञानादितिभावप्रधानइति ॥ अतिरोहितविज्ञानस्यवायोर्भावोविज्ञानतिरोभावाभावएव अतोयुक्तंतेनसाद्द
श्यमुक्तंव्याख्यानंचेतिभावः । परमात्मेत्यादिविशेषणद्वयस्यवैयर्थ्यंपरिहरति ॥ परमात्मेति ॥ रामः देहनाशादिरहितः । पर
मचेतनत्वात्सनातनत्वाच्चेति तत्रमुख्यामृतत्वेयुक्तिद्वयमित्यर्थः । ननुसनातनत्वंनामनित्यत्वंदेहनाशादिरहितत्वमेवेतिसाध्या
वैशिष्ट्यमितिचेत् मैवं । नादेनसहितःसनादनःसनादनएवसनातनः । तृतीयोतिशयेइतिसूत्रात् । देहनाशादिरहितत्वेनश्रुति
प्रमितइतियावत् । अतोनसाध्यवैशिष्ट्यं । उक्तंच नित्यःसर्वगतःस्थाणुरचलोयंसनातनइत्यत्रनित्यपदेनपौनरुक्त्यमाशंक्यगीता

अतिरोहितविज्ञानादितिभावप्रधानोनिर्देशः । मुख्यामृतः देहना
शादिरहितः । परमात्मासनातनइतितत्रयुक्तिद्वयं ॥ खं० ॥ १८ ॥

तात्पर्यनिर्णये नादेनसहवर्ततइतिसनादनएवसनातनइति ॥ ततश्चयोसावसावित्यादिसार्धमंत्रस्यायमर्थः ॥ प्राणादिप्र
तीकस्थंभगवंतंप्रार्थयते ॥ योसावित्यादि ॥ योसौप्रसिद्धोऽसौप्राणवाचकस्यासुशब्दस्यसप्तम्यंतमिदं । प्राणेनियामकतया
स्थितःपुरुषःसएवोपासकांतर्गतो अहं अहेयत्वादहंशब्दवाच्यः । अस्मि नित्यास्तित्वेनप्रमितत्वादस्मिशब्दवाच्य स्तंचपश्या
मि । अथवापूषन्नित्यादिनापूषादिशब्दैरुपलक्षणयाप्राणाद्यनेकप्रतीकस्थत्वंविष्णोरुक्तं तत्रभगवतोधिष्ठानभेदप्रयुक्तभेदशंकायां
योसावित्याद्यर्धःप्रवर्तते । योसौप्रसिद्धोऽसौप्राणेस्थितः यश्चाहमस्मिशब्दवाच्यतयोपासकेषुस्थितः । उपलक्षणमेतत् । यश्च ॥ ६४ ॥

भा० । मुख्यामृतःस्वयंरामःपरमात्मासनातनःइति रामसंहितायां ॥ १८ ॥

पूषादिशब्दवाच्यतयापूषादिषुस्थितःससर्वोप्येकएव । नाधिष्ठानभेदप्रयुक्तभेदवान् । ननुसोहमस्मीतिजीवांतर्गतस्यपरमे श्वरस्यनित्यास्तित्वमहेयत्वेनकल्याणतमरूपत्वंचोक्तं । तन्नयुक्तं । प्रत्यक्षतएवदेहस्यभस्मांतत्वदर्शनात् । देहनाशेचतदंत र्गतस्यजीववन्मरणाद्यवश्यंभावादित्याशंकानिरासायोक्तं वायुरनिलमित्यादि ॥ यद्यपीदंशरीरंभस्मांतं । तथापिनतदंतर्गतस्य परमेश्वरस्यमरणादिदोषप्रसंगः । कुतइत्यतःकैमुत्येनपरमेश्वरस्यामृतत्वसिद्धेरित्याशयेनोक्तं वायुरनिलममृतमिति ॥ अनिलं व्यत्ययेनानिलः । अःब्रह्मैव निलंनिलयनंआश्रयोयस्यासौतथोक्तः । परमेश्वराश्रितोवायुरपि यदामृतंअमृतः अथतदापरमे श्वरोअमृतइतिकिमुवक्तव्यमिति ॥ खं० १८ ॥ विशकलिततयाटीकोक्तस्यमंत्रार्थस्यबुद्ध्यारोहायसंग्रहान्नदोषःशंकनीयः । ए

अथप्रणवप्रतीकंप्रार्थयते ॥ ॐमिति ॥ ओतत्वादिगुणयुक्त क्रतोमांस्मर ।

वमन्यत्रापि । उत्तरंभाष्यमवतारयितुमोमित्यादिश्रुतिप्रतिपाद्यंतावदाह ॥ अथप्रणवप्रतीकमिति ॥ प्रणवप्रतीकमितिबहु व्रीहिः । भगवंतमितिशेषः । अग्निप्रतीकंभगवंतमितिवक्ष्यमाणत्वात् । ॐओंप्रतीकात्मकेतिव्याख्यानं अकारवाच्येन तत्पदा र्थेनोकारवाच्यस्यत्वंपदार्थस्याभेदोमकारेणोच्यतइतिव्याख्यानंचानुपपन्नमप्रामाणिकत्वात् । प्रमाणविरुद्धत्वाच्चेत्याशयेन ओ तमत्रजगद्यस्मादोंतस्माद्भगवान्हरिरित्यादिप्रमाणंमनसिनिधायव्याचष्टे ॥ ओतत्वादिगुणेति ॥ जगदाधारत्वादिगुणयुक्ते त्यर्थः ॥ **मांस्मरेति** ॥ अनेनश्रुतौमामित्यध्याहर्तव्यमित्युक्तंभवति । ततश्चक्रतोस्मर । यन्ममकर्तव्यंतस्यकालोयंप्रत्युपस्थि

ईशा० ८६ उप० । ॐक्रतोस्मरकृतꣳस्मर । ॐक्रतोस्मरकृतꣳस्मर ॥ १९ ॥

तः । अतस्तत्स्मरेतिव्याख्यानमयुक्तं । कृतश्रवणादिकेनमोक्षार्थसाक्षात्कारायभगवदनुग्रहस्यप्रार्थनीयत्वेपि स्वकर्तव्यस्मरण
स्याप्रार्थनीयत्वात् भगवतःस्मरणासंभवेनतत्प्रार्थनानुपपत्तेश्चेतिभावः ॥ ध्यानादिकंचेति ॥ अनेन अग्नेयन्मयाबाल्यप्रभृ
तिअनुष्ठितंकर्मतच्चस्मरेतिव्याख्यानमयुक्तमित्युक्तंभवति । भक्तानामितिकर्तरिषष्ठीतिभ्रमनिरासायाह ॥ भक्तकर्मकमिति ॥

मयाकृतंच ध्यानादिकंचस्मरेति । अभ्यासस्तात्पर्यार्थः । अत्रस्मरणंनामप्रसिद्धमेवेतिप्रती
तिंस्मृत्यैवपरिहरति ॥ भक्तानामिति ॥ भक्तकर्मकंयद्विष्णोःस्मरणं तदनुग्रहोन्मुखत्वमेव ।
विष्णौयःस्मरणशब्दःप्रयुज्यतेसस्मरणकार्यानुग्रहोन्मुखत्वएव लक्षणयावर्ततइतियावत् ।
नैवान्य त्संस्कारकारणकंज्ञानमित्यर्थः । नकेवलंभक्तविषयएवं किंतुसर्वत्रापीत्युक्तं ॥ क
चिदिति ॥ कुतः नित्यज्ञप्तिस्वरूपतः । स्मरणंह्यनुभवनाशे तज्जन्यसंस्कारसहकृतेनमनसा
जायते । ईश्वरश्चनित्यज्ञानस्वरूपइतितस्यस्मरणासंभवाल्लक्षणाश्रयणमितिभावः ॥ १९ ॥

अनेनकर्मणिषष्ठीत्युक्तंभवति ॥ अनुग्रहोन्मुखत्वमेवेति ॥ अनेनैवशब्दसंबंधोदर्शितः । नन्वनुग्रहोन्मुखत्वं नस्मरणा
भिन्नं । नापितत्पदवाच्यं । तत्कथंसामानाधिकरण्यमित्यतआह ॥ विष्णाविति ॥ शक्यसंबंधसूचनायस्मरणकार्येत्युक्तं ।
मुख्यार्थानुपपत्त्यभावान्नलक्षणांगीकार्येत्याशयेनशंकते ॥ कुतइति ॥ १९ ॥ अग्नेनयेतिप्रार्थनस्यपूर्वेणसंगतिमाह ॥ 

भा० । भक्तानांस्मरणंविष्णोर्नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वंतुनैवान्यत्कचिदिष्यतइतिब्रह्मतर्के ॥ १९ ॥

साक्षात्कारेति॥भाष्ये त्वद्दत्तयेत्येतद्भागवतेभगवंतंप्रतिध्रुवस्यवचनं । नन्वस्मानल्पीकुर्वदित्ययुक्तं । अस्मानित्यस्यनयेत्यनेना
न्वितत्वादित्यतआह ॥ अस्मानित्यन्वयसिध्यर्थमावर्तितमिति ॥ अस्मानित्यावर्तितमित्यन्वयः । आवर्तनप्रयोजनकथ
नमन्वयसिद्ध्यर्थमिति । जुहुराणमित्यस्यान्वयसिद्ध्यर्थमित्यर्थः । अस्मानित्यस्यान्वयसिद्ध्यर्थमावर्तितमितिपाठे । अस्यजुहुरा

साक्षात्कारप्रार्थनानंतरमग्निप्रतीकंभगवंतंमोक्षार्थंप्रार्थयते ॥ अग्नइति ॥ वयुनानिकर्माणीतिकेषां
चिद्व्याख्यानं तदसत् । मोक्षस्यकर्मसाध्यत्वाभावेनतदुक्तेर्वैयर्थ्यप्रसंगादित्यभिप्रेत्य वयुनशब्दार्थ
माह ॥ वयुनमिति ॥ वयुनशब्दस्यज्ञानवाचित्वंकुतइतिचेत्प्रयोगंदर्शयति ॥ त्वद्दत्तयेति ॥ जुहु
राणं कुटिलमित्यन्यथाप्रतीतिनिरासायाह ॥ जुहुराणमिति ॥ अस्मानित्यन्वयसिद्ध्यर्थमावर्तितं ।
युयोधीत्यप्रतीतार्थपदंव्याख्याति ॥ युयोधीति ॥ कुतोयंपदद्वयार्थइत्यतःसमाख्यानादित्याह ॥

णमित्यन्वयसिद्ध्यर्थमस्मानित्यावर्तितमितियोजनाद्रष्टव्या ॥ समाख्यानादित्याहेति ॥ यद्यपिभाष्ये पूर्वार्धेनैवपदद्वयंव्या
ख्यातं । तथापि समाख्यानत्वज्ञापनायास्मानित्यावृत्तेःप्रामाणिकत्वज्ञापनायचोत्तरार्धोदाहरणमितिज्ञातव्यं ॥ धातुसूत्रमि

उप० । अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् । युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ २० ॥
भा० । वयुनंज्ञानं त्वद्दत्तयावयुनयेदमचष्टविश्वमितिवचनात् । जुहुराणंअस्मानल्पीकुर्वन् । युयोधिवियोजय

ति ॥ धातुव्याख्यानरूपंसूत्रमित्यर्थः । ननुयुयुइत्यस्यधातुत्वेपि विशिष्टस्यतदभावाद्धातुरित्ययुक्तमित्यतआह ॥ धात्विति ॥
भा० ॥ २० ॥ अर्चिरादिमार्गेणेति ॥ एतच्चोपलक्षणं । स्वोत्तमदेवतासुलयेनचेत्यपिद्रष्टव्यं । यथाश्रुते स्वायंभुवादिदे
वानामर्चिरादिमार्गरहितानांप्रार्थनानुपपत्तेः ॥ मोक्षाख्यवित्तायेति ॥ अनेनराये धनाय । कर्मफलभोगायेत्यर्थइतिव्या

यदिति ॥ युयोधीत्यस्यवियोगार्थसिद्धयेधातुसूत्रमपिपठति ॥ युयुवियोगइतिधातुरिति ॥
धातुव्याख्यानमित्यर्थः । नमउक्तेर्भूयिष्ठत्वमभ्यस्तत्वमतोभ्यधिकार्थंवदन् नमस्कारस्यकथमु
क्तित्वमित्याशंकांपरिहरति ॥ भक्तीति ॥ ततश्चायमर्थः । हेअग्ने अस्मा न्सुपथापुनरावर्त्तिव
र्जितेनार्चिरादिमार्गेण रायेमोक्षाख्यवित्तायनय । कुतः । हेदेव अस्मदनुष्ठितानि विश्वानिसं
पूर्णानि मोक्षायपर्याप्तानीतियावत् । वयुनानिज्ञानानि भवान्वेद । प्रारब्धकर्मभिर्बद्धस्यकथं
मोक्षइत्यतउक्तं ॥ युयोधीति ॥ अस्मान्जुहुराणमल्पीकुर्वत् । संसारेपरिवर्तयदितियावत् ।

ख्यानमपास्तंभवति ॥ नयनोमोक्षवित्तायेतिसमाख्याविरुद्धत्वात् । एतदर्थंचोत्तरार्धोदाहरणंकृतं । विश्वंपूर्णमिहोच्यतइति
प्रमाणानुसारेणाह ॥ संपूर्णानीति ॥ भगवदितरेषामसंपूर्णज्ञानत्वादाह ॥ मोक्षायेति ॥ प्रारब्धपुण्यस्यापिमोक्षप्रतिबंधक



भा० । यदस्मान्कुरुतेऽत्यल्पांस्तदेनोऽस्मद्वियोजय । नयनोमोक्षवित्तायेत्यस्तौग्यज्ञंमनुःस्वराडितिस्कांदे । युयुवियोगइतिधातुः । भ
क्तिज्ञानाभ्यांभूयिष्ठांनमउक्तिंविधेम ॥ २० ॥

त्वात्पापमात्रग्रहणमयुक्तमित्यतोविशेषशब्दस्यसामान्येलक्षणेत्यभिप्रेत्याह ॥ कर्मेतियावदिति ॥ प्रारब्धपुण्यपापात्मकमि त्यर्थः ॥ अनिष्टमिति ॥ परमपुरुषार्थविरोधीत्यर्थः । एतच्चस्वरूपकथनं । संचितेष्टनाशस्यापुरुषार्थत्वेनसंचितानिष्टपुण्यस्यै वनाश्यत्वेनसंचितपुण्येइष्टानिष्टपुण्यविभागसद्भावेपिप्रारब्धेपुण्यमात्रस्यभोगनाश्यत्वेनव्यावर्त्याभावादितिज्ञेयं ॥ वियोजये ति ॥ भोगेननाशयेत्यर्थः ॥ भूयिष्ठामिति ॥ भक्तिज्ञानाभ्यामितिशेषः । तेनभूयिष्ठांबहुतरामितिव्याख्यानंनिरस्तंभवति । नमउक्तिं नमइत्युक्तिं । इतिशब्दस्यततश्चायमर्थइत्यनेनान्वयः ॥ समापितभाष्योपीत्यपिपदेनभगवतोभाष्यकारस्य

एनःपाप मनिष्टंकर्मेतियावत् । अस्मद्युयोधि । अस्मत्तोवियोजय । वयं तुभ्यंभूयिष्ठांनमउक्तिंविधेम । नतुतत्प्रतिकर्तुंशक्नुमइति ॥ २० ॥ अथस मापितभाष्योपिभगवानाचार्यो यत्तेरूपंकल्याणतमं योसावसौपुरुष

समाप्त्युद्देशेननत्याद्यनुष्ठानं । येनसमाप्त्यनंतरंतद्व्यर्थमितिशंक्येत । किंतुस्वभावइतिसूचयति ॥ २० ॥ भाष्ये पूर्णेत्यादिविशे षणद्वयोपादानस्याभिप्रायमाह ॥ यत्तेरूपमित्यादि ॥ अत्रपूर्णशक्तीत्याद्येनविशेषणेन यत्तेरूपंकल्याणतममित्येतत्प्रतिपादि तस्यनारायणस्यस्तुतिःकृताभवति । रूपशब्दंमूर्तिपरतयाव्याख्याय मूर्तेःकल्याणतमत्वस्यपूर्णशक्त्याद्यात्मकत्वकथनेनोपपा दनात् । ममाभ्यधिकमित्रायेतिद्वितीयविशेषणेन योसावसौपुरुषइतिप्राणप्रतीकस्थतयोक्तनारायणस्यस्तुतिःकृतावेदितव्या । अधिकमित्रत्वोक्त्या प्रतीकांतरेभगवदुपासनापेक्षयाप्राणप्रतीकेभगवदुपासनस्यभगवदतिप्रीतिहेतुत्वेनावश्यकत्वोपपादनादि

तिद्रष्टव्यं ॥ स्तुतिनतिभ्यामिति ॥ नमइत्युक्तेर्नतित्वंप्रागेवसमर्थितं वेदितव्यं । मूर्तेःपूर्णशक्त्यादिनिर्मितत्वादिप्रतीतिंनि
रस्यन्स्पष्टपदव्यावर्त्यमाह ॥ पूर्णशक्तीत्यादि ॥ करचरणादिमतीत्यर्थइति ॥ अत्रच सज्ज्ञानानंदशीर्षोसावित्यादिप्र
माणंपूर्वोदाहृतमनुसंधेयं । ननुप्रत्युपकारनिरपेक्षयोपकारकृत्सुहृ त्क्लेशस्थानंनिरूप्ययोरक्षांकरोतिसमित्रमितिगीताभाष्ये अ
निमित्तस्नेहवांस्तुसुहृज्ज्ञात्वोपकारकृत् । मित्रमित्यादिगीतातात्पर्येचमित्रादिलक्षणमुक्त्वा सुहृदेषुविशिष्यतइतिसुहृदोमित्रापे
क्षयाआधिक्यस्योक्तत्वादत्रापिममाभ्यधिकसुहृदेइतिवक्तव्यं । तत्कथंमित्रायेत्युक्तमित्यतोभ्यधिकमित्रत्वोक्त्यासुहृत्त्वमेवोक्तंभ

इत्यादिनाप्रतिपादितंनारायणंस्तुतिनतिभ्यांप्रीणयति ॥ पूर्णेति ॥ पूर्णशक्तिचिदानंदश्रीतेजांस्ये
वमूर्तिर्यस्येत्युक्ते करचरणादिमान्विग्रहोनास्तीतिप्रतीतिःस्यात् । अतउक्तं॥ स्पष्टेति॥ स्पष्टाप्रसि
द्धाकरचरणादिमतीत्यर्थः । अभ्यधिकमित्रं निरतिशयोपकारकं । अतिपरमप्रीतिविषयश्चेति ॥७॥

वतीत्यभिप्रेत्यसुहृच्छब्दसमानार्थतयातत्पदंव्याचष्टे ॥ अभ्यधिकमित्रंनिरतिशयोपकारकमिति ॥ निरतिशयोपकारश्च
स्वस्यसंसारावस्थायामेववायुरनिलममृतमित्युक्तामृतत्वप्रदानरूपोतिविशदानादिसार्वज्ञप्रदानादिरूपश्च । यथोक्तं । भक्तानुकं
पादतिशुद्धसंविद्दात्रइति । तद्व्याख्यातंसुधायां । भक्तेमय्यनुकंपादिति ॥ प्रेयसेमेसुपूर्णायेत्यादिभगवत्पादोक्तिंमनसिनिधाय
प्रकारांतरेणव्याचष्टे ॥ अतिपरमप्रीतिविषयश्चेति ॥ इतिशब्दःसमाप्तौ ॥ अथसमापितभाष्यव्याख्यानोभगवांष्टीकाका

भा० । पूर्णशक्तिचिदानंदश्रीतेजःस्पष्टमूर्तये । ममाभ्यधिकभिन्नायनमोनारायणायते ॥



रोमंगलांतानिकार्याणिवीर्यवंतिभवंतीत्युक्तत्वादंतेपिस्तुतिनतिभ्यांभगवंतंप्रीणयति ॥ कमलेति ॥ परमेष्टत्वाद्विष्णोरेववंद्यत्व
मित्यभिप्रायेणकमलेत्याद्युक्तं । अनेनकमलापिवंदिताभवति । विशिष्टत्वाच्चतस्यैवतदित्याशयेनपरमात्मनइत्युक्तं । आत्मश
ब्दश्चेतनपर्यायः । विशिष्टत्वोपपादनायोक्तं ॥ जगज्जनिस्थेमहेतवइति ॥ स्थेमस्थितिः संहाराद्युपलक्षणमेतत् । केचित्तुन
पालकत्वंभगवतोस्ति सृष्टिसंहारकर्तृत्वात् । सत्यांचसृष्टौयावत्संहारंजगत्स्थितेःस्वतएवसिद्धेः । संहर्तुरसंहारव्यतिरिक्तस्यैवर
क्षादिरूपस्यायोगात् । अन्यस्यतुसृष्ट्यादिकर्तृत्वेसंभवतिनिवारणादिव्यापारः । एतेनावांतरोपद्रवनिवारणंचप्रत्युक्तं । तत्रापि
स्वयंकर्तृत्वात् । अतोनविष्णोःपालकत्वमितिवदंति । तन्न । असंहारव्यतिरिक्तस्यधारणपोषणादिव्यापारस्य नैतावदेनापरो

कमलावदनांभोजराजहंसायविष्णवे । नमोजगज्जनिस्थेमहेतवेपरमात्मने ॥ ७ ॥

अन्यदस्त्युक्षासद्यावापृथिवीबिभर्तीत्यादिश्रुतिसिद्धत्वेन पालकत्वस्यावश्यमंगीकार्यत्वादित्याशयेन स्थेम्नःस्वशब्देनोपा
दानं । यद्यप्यजिरशिशिरशिथिलस्थिरेत्युणादिसूत्रेणस्थाधातोःकिरच्प्रत्यये आतोलोपइतिधात्वाकारलोपेचनिष्पन्नस्यदृढार्थ
स्थिरशब्दस्यदृढादित्वेनवर्णदृढादिभ्यइतीमनिच्प्रत्यये प्रियस्थिरेत्यादिनास्थादेशेनिष्पन्नस्यस्थेमशब्दस्यदार्ढ्येप्रसिद्धिर्नतुस्थि
तौ । तथापि उणादयोबहुलमितिबहुलग्रहणात्जनिमवेमेत्यादिवत्स्थाधातोर्भावेइमनिच्प्रत्ययेगुणेचनिष्पन्नस्थेमशब्दस्यस्थि
त्यर्थत्वोपपत्तेः । अखिलभुवनजन्मस्थेमभंगादिलीलेविनतविविधभूतव्रातरक्षैकदीक्षे ॥ श्रुतिशिरसिविदीप्तेब्रह्मणिश्रीनिवासेभ
वतुममपरस्मिन्शेमुषीभक्तिरूपेतिरामानुजनांदीश्लोके द्राघीयांसःसंहतास्थेमभाजइत्याद्यन्यत्रापिस्थितावभियुक्तप्रयोगाच्च ।

एतच्चस्थेमस्थितिरिरितिश्रुतप्रकाशिकाव्याख्यायांभावप्रकाशिकायांस्पष्टमिति ॥ रघुनाथेनयाज्ञीयमंत्रभाष्यस्यपंचिका ॥ अनू

इतिश्रीमदानंदतीर्थभगवत्पादविरचितस्ययाज्ञीयमंत्रभा
ष्यस्यविवरणंश्रीमज्जयतीर्थभिक्षुविरचितंसंपूर्णं ॥ ७ ॥

दितातत्सुकृतंमद्गुरूनेवगच्छतु ॥ ७ ॥ इतिश्रीमद्रघुनाथतीर्थविरचिताईशावास्यभाष्यटीकाविवृतिःसंपूर्णा ॥



---

भा० । इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितमीशावास्योपनिषद्भाष्यंसंपूर्णं ॥

अयं ग्रंथः कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण मुंबय्यां निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकाशितः.
शाकः १८२९ सन १९०७.